च, सएवाहं मूलदेवसखः शशः । तदुच्यतां सद्भावः । किमाश्रयोऽयं सन्तापः ? तव हि—

अव्याधिग्लानमङ्गं करतलकमलापाश्रितं गण्डपार्श्वं
दृष्टिर्ध्यानैकताना जलमिव हृदयं जृंभणा वर्णभेदः ।
निश्वासायासकर्ता न च न रतिकरस्तापनश्चेन्द्रियाणा
मेकद्रव्याभिलाषी प्रतिनव इव ते चोरि कोऽयं विकारः ॥

कथं निश्वसितमनया । हन्त सन्धुक्षितो मदनाग्निः । भवतु । इदानीमात्मगतं भावमस्या ज्ञास्यामः । यदि वचमपार्थीभूता विस्रंभाणा मरोगास्तु भवती । साधयाम्यहम् । किं ब्रवीषि— "चपलः खलु भावः" इति । हन्त ! प्रतिज्ञातम् । एषापि मम वक्ष्यति । वासु कुतो मे धृति स्तवेदृशेन शरीरोदन्तेन । अपि च, दीर्घसूत्रता नाम कार्यान्तरमुत्पादयति । तदुच्यतां सन्तापकारणम् । किं ब्रवीषि—"न खलु मे भावं प्रति गुह्यमस्ति । अयन्तु वसन्तस्वभावः— यन्मे गुरुजनयन्त्रणया निभृतस्यापि मनसः किमप्यकारणेनौत्सुक्य मुत्पादयति" इति । साधु भोः नायं व्याधिव्यपदेशः । चोरि एतदपि जानीषे साधु युवती खलु देवसेना संवृत्तेति । वासु यद्येवं अलमलमनुबन्धेन । ऋतुपरिणामेन स्वस्था भविष्यसि । कथं व्रीलितमनया । प्रियवादिनिके किमिदं, तालपत्रकेऽभिलिखितम् ? किं ब्रवीषि— "नाटकभूमिका" इति । पश्यामस्तावत् । (गृहीत्वा वाचयति)—

"कुमुद्वतीप्रकरणे शूर्पकसक्तां राजदारिकां धात्री रहस्युपालभते ।

'उन्मत्ते नैव तावत्स्तनविषममुरो नोद्गता रोमराजिः
न व्युत्पन्नासि च त्वं व्यपनययुवतीदोहलं दुर्विदग्धे ।
व्युत्पन्नाभिः सखीभिः सततमविनयग्रन्थमध्याप्यसे त्वं
केनेदं बालपक्षे मनसिजकदनं कर्तुमभ्युद्यतासि' ॥

किमाह देवसेना—"एतत्तावन्मयैव न श्रुतमस्ति" इति। हन्त! एष उद्गीर्णः स्वभावः। इत्थमहमपि कामयामीत्युक्तं भवति। किमाह देवसेना—"हलग्राही भावः" इति। वासु अलमलमस्मान् विक्षिप्य। मेघावगूढमपि चन्द्रमसं कुमुद्वतीप्रबोधः सूचयति। गच्छ पुरुषद्वेषिणि; आपन्नेदानीमासि।।

नैवाहं कामयामीत्यसकृदभिहितं यत्त्वया गूढभावे
सा त्वं तन्वीस्वभावात्कथय तनुतरा चोरि केनासि जाता।
हस्तप्रत्यस्तगण्डे प्रशिथिलवलये भिन्ननिःश्वासवक्त्रे
व्याधिक्लिष्टो जनोऽयं किमिदमतिशठे बाध्यते धीरहस्तः।।

किमाह प्रियवादिनिका—"सति प्रवृत्ते कामतन्त्रप्रकरणे दिष्ट्येदानीमस्मत्स्वामिनी पुरुषविशेषमनुरक्ता, न पृथग्जनम्" इति। तत्कस्यायमवन्तिनगर्यां पुरुषविशेषशब्दः प्रचरति? किमाह भवती—"कस्य तावत्त्वयाभ्युपगम्यते" इति। कस्यान्यस्य, ननु कर्णीपुत्रस्य। स हि—

कुले प्रसूतः श्रुतवानविस्मितः
स्मिताभिभाषी चतुरो विमत्सरः।
प्रियंवदो रूपवयोगुणान्वितः
शरीरवान् काम इवाधनुर्धरः।।

किं अधोमुखी देवसेना संवृत्ता। अलमलमनिभृते दुकूलदशान्तोद्वेष्टनेन। कथ्यतां तावत्। किमभाजनीभविष्यामः? कथं समौनमेवास्ते। अथवा लज्जा नाम विलासयौतकं प्रमदाजनस्य, विशेषतश्चाप्रौढकामिनीनाम्। तदेषा कथमिव स्वयं वक्ष्यति। तत्कामं पुरुषविशेष इत्यसाधारण एव शब्दः कर्णीपुत्रे प्रतिवसति।

तथापि नाम त्वलब्धगांभीर्यो धृतिमुपयात एनां व्याहारयामि । वासु देवसेने किमस्माकं पररहस्यश्रवणेन । उदासीनाः खलु वयम् । तदामन्त्रये भवतीम् । कर्णीपुत्रोऽपि पाटलीपुत्रविरहात् स्वजनदर्शनोत्सुको भृशमस्वस्थः । स एषोऽद्य श्वो वा प्रस्थास्यते । पुनर्द्रष्टास्मि भवतीम् । किन्तु स्वस्थरूपया त्वया भवितव्यम् । स्मर्तव्याः स्मो वयम् । (इत्युत्थाय प्रस्थितः । सत्वरं निवृत्त्य) अये केनैतदुक्तं "हन्त व्यापन्नेदानीम्" इति । आ देवसेना कथं रोदिति । वासु किमिदम् । अलमलं रुदितेन । भवतु । गृहीतम् । दिष्ट्या पात्रगतो मनोरथः । कर्णीपुत्रस्यापि त्वन्मय एव व्याधिः । तदितरेतरस्यौषधत्वेन कल्पयितव्यम् । किं ब्रवीषि— "किमुच्चैः कथयसि, दुःखशीलः खलु भावः" इति । अलमलं यन्त्रणया—

दक्षात्मजाः सुन्दरि योगताराः
किं नैकजाताः शशिनं भजन्ते ।
आरुह्यते वा सहकारवृक्षः
किं नैकमूलेन लता द्वयेन ॥

किं ब्रवीषि—"तथेदानीं संप्रधार्यतां यथोभयं रक्ष्यते" इति । अथ किम् । संप्रधारितमेवैतत् । श्वः किल ते भगिनी यथोचितमाचार्यगृहं नृत्तवारेण यास्यति । ततो लब्धान्तरा विस्रंभा सुभगे सुखप्रश्नव्याहारव्याजेन त्वं वा तत्र यास्यसि स वेहागामिष्यति । किमियं विमर्शडोला वाह्यते ? किमाह प्रियवादिनिका—"न ममेहार्यपुत्रस्यागमनं रोचते—यथात्रभवत्यास्तत्र गमनम् । गणिकाजनो नाम पैशुन्यप्राभृत एषा जातिः । तस्मादहमेव यथोचितं योजयिष्यामि—यथा नृत्तवारात्प्रस्थिताद्य देवदत्ता स्वयमेव मम स्वामिनीं

सुखप्रआभिगमनेनार्यमूलदेवसकाशमनुनेष्यति" इति । साधु प्रियवादिनिके इदानीं खलु यथार्थनामता । उचितं चास्यास्तत्र गमनम् । किन्तु स्वस्थरूपयानया भवितव्यम् । किमाह देवसेना—"ननु भावदर्शनात्स्वस्थैवाहम्" इति । प्रियं मे । कृतं मदनकर्म । कर्णीपुत्रप्राणधारणार्थं किञ्चित्स्मरणीयं दातुमर्हसि । किं ब्रवीषि—"किं दास्यामि" इति । किं नाम विचार्यते । इदं खलु—

ईषल्लीलाभिदष्टं स्तनतटमृदितं पत्रलेखानुविद्धं
खिन्नं निश्वासवातैर्मलयतरुरसक्लिष्टकिंजल्कवर्णम् ।
प्रातर्निर्माल्यभूतं सुरतसमुदयप्राभृतं प्रेषयास्मै
पद्मं पद्मावदाते करतलयुगलभ्रामणक्लिष्टनाळम् ॥

कथं कटाक्षपातेनैतदनुज्ञातमनया । हन्त ! प्रतिगृहीतं प्राभृतं सुरतसत्यंकारस्य । यावदनेनौषधेन कर्णीपुत्रं सञ्जीवयामि । (गृहीत्वोत्थाय स्थित्वा) प्रस्थितोऽस्मि । सुखं भवत्यै । सुभगे गृह्यतामाशीः—

भयद्रुतमसूचितप्रचलमेखलानूपुरं
सशङ्कशिथिलोपगूहमवमुक्तनीवीपथम् ।
स्वयं समभिवाहयत्वयमुदात्तरागायुधः
तव प्रथमचोरिकासुरतसाहसं मन्मथः ॥

(इति निष्क्रान्तो विटः)

इति श्रीशूद्रकविरचितः पद्मप्राभृतकं नाम भाणः
समाप्तः



श्रीः

ईश्वरदत्तप्रणीतः

# धूर्तविटसंवादः

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सू०— विद्यया ख्यापिता ख्यातिः सज्जनाराधनं धनम् ।
तेषां प्रीत्या भवेद्धर्म इत्यस्माकमुपक्रमः ॥

तस्मादार्यजनप्रीत्यर्थं किञ्चिन्नाटकमारभामहे । आर्ये सधनजनप्रीतिवर्धनकरायामधनानां यौवनोत्पीडितमन्दभाग्यानां शोकवर्धनकरायां कुमुदकुवलयकह्लारकमलनिचुलकेतकीककुभकन्दलीषण्डमण्डितायामस्यां प्रावृषि हृदयप्रीतिजननं किञ्चिद् गीतं गीयताम् । अयं खलु तावत्कालः—

जलधरनीलालेपः तटित्समालभनविह्वलद्गात्रः ।
विकसितकुटजनिवसनो विटो यथा भाति घनसमयः ॥

(निष्क्रान्तः)

स्थापना ।

---

(ततः प्रविशति विटः)

विटः— साध्वभिहितमेतत्—

श्रीमद्वेश्ममृदङ्गवाद्यकुशला धाराः सृजन्त्यम्बुदाः
क्रुद्धस्त्रीभ्रुकुटीतरङ्गकुटिला विद्युल्लता द्योतते ।
गाढालिङ्गनहेतवः प्रचलिताः शीताः पयोदानिलाः
कामः कामिमनस्सु मुञ्चति दृढानाकर्णपूर्णानिषून् ।

अपि च,

ते दग्धाः प्रवसन्ति ये समदना नायान्ति वा प्रोषिता
मुग्धास्तेऽनुनयन्ति ये न कुपिताः कुप्यन्ति वात्यायतम् ।
धन्यास्ते खलु ये प्रियावशगता येषां प्रिया वा वशे
कालः कामयतीव मेघपटहैरेवं जगद्घोषणाम् ॥

अहो नु खलु जलदकालस्य ललितजनमनोग्राहिणी बहुवृत्तान्तता । संप्रति हि — सजलजलदावरुद्धदिनकरकराः सोपस्नेहा भूमिभागाः बहुदिवससदृशवृत्तान्ततया सौकुमार्यमिवोपगता दिवसाः । कुटजगन्धावर्तितमधुकराणि प्रवृत्तनृत्तबर्हिणानि शीताम्बुवन्ति विहारक्षमाण्यरण्यानि । प्रचलितेन्द्रगोपका नवहरिततृणाङ्कुराः सालक्तकयुवतिचरणविन्याससयोग्या वनभूमयः । कलुषसलिलवाहिन्योऽविभावनीयतीर्थाः शठा इव नार्यो दुरवगाहा नद्यः । अपि च,

कदम्बगन्धमादाय वनान्तरविनिःसृतः ।
आयाति धाराशिशिरः सप्राभृत इवानिलः ॥

तद्रमणीयोऽयं कालः । न चास्मिन्नौत्सुक्यं न भवति । कुतः—

भ्रान्तपवनेषु संप्रति सुखिनोऽपि कदम्बवासितवनेषु ।
औत्सुक्यं वहति मनो जलधरमलिनेषु दिवसेषु ॥

तच्च द्विविधमौत्सुक्यं भवति— कारणादकारणाच्च । तत्र कारणोद्भूतस्यौत्सुक्यस्य शक्या प्रतिक्रिया कर्तुम् । यत्त्वकारणादुत्पद्यते तत् कुम्भदासीकृतकरुदितमिव दुश्चिकित्सं भवति । वयञ्च कानिचिदिमान्यहानि दुर्दिनदोषादल्पपदप्रचारत्वाच्च भृशतरमुन्मनसः संवृत्ताः । कुटुम्बिन्याश्च नः कण्ठमाधुर्येण तेनाप्यायितमनसोऽप्यपयानमेव बहुमन्यामहे । (विलोक्य)

दिष्ट्येदानीं सुदिनं संवृत्तम् । निवृत्तसङ्गीतमृदङ्गसन्निभाः प्रशान्तरवा मेघाः । दुर्दिनदोषचकितः प्रासादशिखरमारुह्य पक्षौ वितत्य विरौति गृहमयूरः । सन्दष्टोपवीणावियुक्तविरलतन्त्री शीतवातवेपितेव कामिनी बालातपमासेवते वीणा । निष्ठीवन्तीव विमलमुक्तादामसन्निभान् प्रणालीमुखैस्तोयावशेषान् हर्म्यस्थलानि । दुर्दिनदोषान्निष्प्रभाः संप्रमृज्यन्ते दर्पणाः । अपि च—

प्रवरगृहनिरोधखेदालसा यान्ति वातायनान्यङ्गना
जलदसमयदोषगाढार्पणा हेमकाञ्ची पुनर्योज्यते ।
उपवनगमनाय सञ्चार्यते वारमुख्यो जनः कामिभिः
तरुणतृणसखेषु लाक्षारसः पात्यते पादपद्मेष्वनङ्गावहः ॥

तत् क्व नु खल्विदमौत्सुक्यं विनोदयेयम् । किं नु द्यूतसभायामाहोस्वित् वेशवाटे । (विचार्य) नमोऽस्तु द्यूताय । एकशाटिकामात्रावशिष्टो हि नः परिच्छदः । अक्षाश्च नामानभिजातेश्वरा इव न सर्वकालसुमुखा भवन्ति । ततो वेशमेव यास्यामः । तत्र हि—

कान्तान्यर्धनिरीक्षितानि मधुरा हासोपदंशाः कथाः
पीनश्रोणिनिरुद्धशेषमतुलस्पर्शं तदर्धासनम् ।
स्नेहव्यक्तिकरान् करव्यतिकरांस्तांस्तांश्च रम्यान् गुणान्
वेश्याभ्यः प्रणयादृतेऽपि लभते ज्ञातोपचारो जनः ॥

(निरीक्ष्य) संव्रियतां द्वारम् । किमाह भवती— "वल्मीकमिव बहुद्वारं ते गृहम्" इति । यद्यप्यन्योऽस्ति नगरघट्टकानां प्रवेशाय मार्गः तथापि तैरन्यगृहपरिचयाद् द्वार एव लक्ष्यं गृह्यते । अपि च अलमुत्तरोत्तरेण । हा ध्वस्तोऽस्मि । (परिक्रम्य) स्थाने खलु कुसुमपुरस्यानन्यनगरसदृशी नगरमित्यविशेषग्राहिणी पृथिव्यां स्थिता कीर्तिः । बहूनि खल्वस्य पुरस्य गृहाण्युच्छ्रायवन्ति । प-

ण्यसमुदायाज्जनबाहुल्याच्च तांस्तांश्च समृद्धिविशेषान् दृष्ट्वा विस्मयते जनः । तत्र को विस्मयः? सन्ति ह्यन्यान्यपि समृद्धिमन्ति पुराणि । येत्वस्य निःसाधारणा गुणास्तान् वक्ष्यामः । तथा हि—

दातारः सुलभाः कला बहुमता दाक्षिण्यभोग्याः स्त्रियो
नोन्मत्ता धनिनो न मत्सरयुता विद्याविनीता नराः ।
सर्वः शिष्टकथः परस्परगुणग्राही कृतज्ञो जनः
शक्यं भो नगरे सुरैरपि दिवं सन्त्यज्य लब्धुं सुखम् ॥

(परिक्रम्य)

अये श्रेष्ठिपुत्त्रः कृष्णिलकः खल्वसौ वेशप्रसङ्गात् सफलीकृतयौवनोऽस्मद्विधजनप्रणयभाजनीभूतः कुटुम्बात्ययभीरुणा पित्रा प्रयत्ना द्रक्ष्यमाणः कथमपि वेशं गत्वा प्रियोपभुक्तशोभिना वपुषा द्रुततरमित एवाभिवर्तते । अवश्यमभिनन्दयितव्यः । उपगमिष्यामस्तावदेनम् । (उपगम्य) भोः कृष्णिलक एवमेव सफलीकृतयौवनो भवतु भवान् । ननु खलु माधवसेनाया गृहादागम्यते? किं ब्रवीषि— "कथं विज्ञातवान्" इति । किमत्र विज्ञेयम् । सदृशसंयोगी हि भगवान् मदनः । न चाहं भवत्त्यापाराग्निवृत्तः । अथवा अविरतसुरततृष्णां कामिनीमुत्सृज्य क्वासि प्रस्थितः? किमाह भवान्— "एतत्त्विदानीं कथं विज्ञातवान्" इति । एतदपि नातिसूक्ष्मम् । कुतः—

हस्ते ते परिमृज्य(ष्ट) साश्रुवदनं(ने) नेत्राञ्जनं लक्ष्यते
केशान्तो विषमश्च पादपतनादद्याप्ययं तिष्ठति ।
व्यक्तं तत्र मनो निधाय भवता मुक्ता शरीरेण सा
मार्गे पोत इवानिलप्रतिहतः कृच्छ्रात् तथा गाहसे ॥

किं ब्रवीषि — "तातं तावदवलोकयिष्यामि" इति । कथमनेनैव वेषेण? अवस्कन्दं दास्यति । किं ब्रवीषि— "यदीदृशी-

मवस्थां तातो मे पश्येत् जीवितपरित्यागमपि कुर्यात्" इति । अनवरतसूरततृष्णां कामिनीं त्याजयता किं तेन न कृतम् । पिता नाम खलु सयौवनस्य पुरुषस्य मूर्तिमान् शिरोरोगः । न च किल भोः पितृमता शक्यं परस्परामर्षविवर्द्धितपणरागस्य साधिक्षेपवचनालङ्कृतस्य तेजस्विपुरुषनिकषोपलस्य द्यूतस्य दर्शनमात्रमप्युपलब्धुम् । न च किल शक्यं समुपचितोत्पलखण्डकानां सहकारतैलोद्गतचन्द्रकाणां कामिनीनिःश्वासविक्षोभिततरङ्गाणां प्रनृत्तबर्हिणाकाराणां वारुणीचषकाणां गन्धमात्रमपि विज्ञातुम् । न च किल शक्यं द्विधाभूतगोष्ठीजनेषु वयस्याधासनोपविष्टगणिकाजनेषु कामिनीसान्निध्या दुर्मीमांसितपणेष्वासक्तमण्डलेषु पक्षियुद्धेषु प्राश्निकत्वमपि कर्तुम् । न च किल शक्यं वातायनाभोगविनिष्पातितपीनपयोधराभिः ससंभ्रमोद्धूतललिताग्रहस्ताभिः पौरवधूभिः सबहुमानमवेक्ष्यमाणस्य मदरभसस्य गजपतेः पन्थान मनुसर्तुम् । नच किल शक्यं अर्धोरुकपरिहितेनाकृष्टखड्गमात्रसहायेनाकृपणां वृत्तिमाकांक्षता मित्रार्थे बन्धनच्छेदोद्यतेन प्रज्वालितोल्कापिङ्गलासु वीररात्रिषु नरपतिमार्गमवगाहितुम् । नच किल शक्यं प्रत्युपकारचिन्तोपहतचित्तेन सन्निवृत्तश्लाघादोषेण प्रत्युपकारपीडितेन मित्रार्थं सर्वस्वत्यागं कर्तुम् । सर्वं चैतत्सह्यम् । यत्तु दासी (स्याः) पुत्राः पितरः स्वयमप्यननुभूतयौवना इव धनकुप्यार्थे वेशवधूभ्यः पुत्रान् धारयन्ति अत्र मे गृहीतपरशोर्जामदग्न्यस्य रामस्य क्षत्रियवधोद्यतस्येव लोकमपैतृकं कर्तुं मतिर्जायते । अथवा यौवनमतिलंघितं नु कुवृद्धैः । नचैतद्विजानन्ति तपस्विनः—यथा विकचकमलान्तर्गतसलिलसुरभिरमृतरससदृशास्वादो मृतमपि पुरुषं संजीवयेद्वेश्यामुखरस इति । अपि च—

काञ्चीतूर्यमसक्तपीनजघनं विस्रंभदत्ताधरं
श्वासोत्कंपितनर्तितस्तनतटं भ्रूभेदजिह्मेक्षणम् ।
सीत्कारानुविषक्तरोमपुलकं कालेन कोपाश्रितं
वेश्यानां क इहास्ति भो मदवशादाज्ञारतं विस्मरेत् ॥

किं ब्रवीषि—"अन्यच्च कष्टं भावाय निवेदयामि" इति । किं तत् । किं ब्रवीषि— "तातः किल मां दारकर्मणि नियुङ्क्ते" इति । धिञ्ञा मस्तु । मातावञ्चो: ईदृशं कष्टम् । ईदृशमपि नाम मया श्रोतव्यम् । शक्यं किलोर्ध्वहस्तेनाक्रन्दितुं वेश्यामहापथमुत्सृज्य कुलवधूकुमार्गेण यास्यतीति । पश्यतु भवान्—

जात्यन्धां सुरतेषु दीनवदना मन्तर्मुखाभाषिणीं
दृष्टस्यापि जनस्य शोकजननीं लज्जापटेनावृताम् ।
निर्व्याजं स्वयमप्यदृष्टजघनां स्त्रीरूपबद्धां पशुं
कर्तव्यं खलु नैव भोः कुलवधूकारां प्रवेष्टुं मनः ॥

किं ब्रवीषि—"एष एव मे निश्चयः" इति । यद्येषभवतो निश्चयः प्रीता स्मः । सदृशमस्मत्संसर्गस्य । गच्छ । इदानीं गृहमेवागम्य पुनरपि त्वां संज्ञामुपलंभयामि । (परिक्रम्य) अयं हि तावदत्याकीर्णजनतया प्रकीर्णवीचिवलय इव सलिलनिधिः सुभीमदर्शनोऽसुखोऽवगाहितुं कुसुमपुरराजमार्गः । इह हि—

यो मां पश्यति सत्वरोऽपि न कथां छित्वा प्रयात्यन्यतः
संबाधेऽपि ददाति चान्तरमसौ सर्वः प्रहृष्टो जनः ।
कश्चिन्नातिचिरं विळम्बयति मां कार्यात्ययाशङ्कया
लोकज्ञैः पुरुषैरहो पुरवरस्यास्मं यशो लक्ष्यते ॥

(परिक्रम्य) अये विटमतिरिव वेशगामिनीयं रथ्या । इतो या-

स्यामः । मया हि—

कृत इह कलहो हृतेह वेश्या
चकितमिह द्रुतमीक्षणं निमील्य ।
इति वयसि नवे यदत्र भुक्तं
तदनु विचिन्त्य समुत्सुको व्रजामि ॥

(परिक्रम्य) हन्त ! लब्धाः प्राणाः । एष वेशमेवास्मि प्रविष्टः । (स्पर्शं रूपयित्वा)

निषेव्य संलोलितमूर्धजानि
वेश्यामुखान्यर्धनिरीक्षितानि ।
आयाति माल्यासवगन्धविद्धो
वेशस्य निश्वास इवैष वायुः ॥

अहो तु खलु कैलासशिखराकारप्राकार(साद)शिखरस्य वेशवधूस्तनतटोपमर्द्यमानगवाक्षस्य सञ्चारितागरुधूपदुर्दिनस्य पुष्पोपहारप्रहसितगृहोपद्वारस्य प्रणादिकाञ्चीतूर्योत्कण्ठकामिजनस्य नूपुरस्वनगद्गदभाषिणः कामकर्मान्तभूतस्य वेशस्य परा लक्ष्मीः । इह हि—समुद्यतकटाक्षप्रहरणाः स्फुटहसितोन्मीलितदशनपङ्क्तयो निभृतभ्रूलतानुवृत्तवचनविन्यासाः पीनपयोधरत्वादनवस्थितलघुप्रावरणा विभ्रमादप्रावरणाश्च विभ्रमविलसितललितचपलगतयः कामविजयपताका इव इतस्ततः सञ्चरन्ति गणिकापरिचारिकाः । नित्यस्मितालंकृतमुखानामविस्मयविस्मिताक्षीणां स्निग्धसुकुमारकुटिलतनुदीर्घकृष्णकेशीनां श्रोणीचक्रोद्वहनमन्दपरिक्रमाणां मत्तद्विरदपरिभावगामिनीनां सुरतप्रपाणामिव तत्र तत्र विचरन्तीनामनिभृतमधुरचेष्टितानां गणिकादारिकाणां दृश्यन्ते विलासनिधयो रूपविशेषाः । अपि च, अनवरतमृदङ्गनिस्वनाः संभ्रान्तपारावतमिथुना गर्जन्तीव प्रासादमालाः । आ-

श्लाघ्यमानशिल्पिजनानि संभ्रान्तप्रेष्यवर्गलुलितपुष्पोपहाराणि स्पर्धन्त इवान्योन्यं भवनद्वाराणि । रतियुद्धश्रमापहारीणि संयोज्यन्ते गन्धतैलानि । पीनस्तनतटविसर्पिणः पिष्यन्ते वर्णकाः । मनस्विनीजनहृदयसुकुमारा आदीयन्ते माल्याभियोगाः । प्रियावचनमिव श्रोत्रावधानकरं श्रूयते वल्लकीवाद्यम् । प्रियजनाधरोपदंशप्रणयी प्रचरति शीधुः । अपि च —

नेत्रैरर्धनिमीलितैः स्तनतटैः सव्याजसन्दर्शितैः
हासैर्व्रीलविभूषितैः श्रुतिसुखैरल्पाक्षरैर्भाषितैः ।
मन्दैर्निश्वसितैः स्वभावमधुरैर्गीतैश्चतालान्वितैः
नित्याकृष्टशरासनं मनसिजं कुर्वन्ति वेश्याङ्गनाः ॥

(परिक्रम्य) अये इयं खलु तावद्यौवनमदानवेक्षितस्तनप्रावरणा पेलवांशुककृतपरिधाना जघनाभरणकृतनीवी विभ्रमावमुक्तैककर्णपाशेन विभ्रस्तहरिणचञ्चलाक्षेण निभुक्तपिण्डितोष्ठेन मुनीनामपि मनःकंपनसमर्थेन सुलभहसितेन मुखेन मदनसेनायाः परिचारिका वारुणिका नाम वामहस्ताङ्गुलिसंदंशेन कर्णोत्पलं कलयन्ती किञ्चिदुन्नतैकभ्रूलता मा मवेक्ष्य प्रहस्यातिक्रामति । अस्या हि—

रोमाञ्चं दर्शयता कपोलदेशे विशालजघनायाः ।
कर्णोत्पलेन कृत इव निरक्षरं चुम्बनोद्‌घातः ॥

का शक्तिरनभिभाष्यातिक्रमितुम् । अभिभाषिष्ये तावदेनाम् । वासु वारुणिके निगृह्यता मात्मा । कथमस्मद्वचनं स्वलीकृत्य गच्छत्येव । सुन्दरि अनेन स्वलीकरणेन प्रीताः स्मः । कथं प्रहस्य स्थिता (उपेत्य) कृतमञ्जलिना । पृच्छामस्तावत्किञ्चित् केनास्य शरत्कमलरजःपुञ्जपिञ्जरस्य गगनतलोन्मुखस्येव चक्रवाकमिथुनस्य स्त-

नयुगळस्य ते प्रथमावतारः सुखमुपभुज्यते ? कथं "ह्री" इत्येकाक्षरमुक्त्वा सव्रीलमवेक्ष्य मां व्रजति तूर्णमनवसितार्धभाषिणी । तत्खलु कामस्य सर्वस्वं (परिक्रम्य)

अये बन्धुमतिका खल्वेषा स्वगृहद्वारकोष्ठगता पार्श्वोपविष्टया चतुरिकया प्रदीयमानप्रतिवचना भ्रूलतालम्बास्तिचिकुरां सायाह्ननलिनसुकुमारां दृष्टिं कृत्वा स्वयमेव मेखलां संयोजयति । अहो ! यौवनानुरूपो व्यापारः । अहो ! सुकुमारं कर्मानुष्ठितम् । अहो ! ललितोऽभिनिवेशः । अहो ! कार्कश्यं प्रकाशयते यत्नः । अहो ! दर्पोद्दशनादाम संयोजयन्त्या किमिवानया नोक्तं भवति । अवश्यमस्या विहारकालचतुरता पूजयितव्या । इदमुपगम्यते । (उपेत्य) वासु कर्मसिद्धिरस्तु ते । भवति कृतमासनेन । पृच्छामस्तावत्किञ्चित्—

एषा कामिकराङ्गुलिप्रियसखी नाभिह्रदांभःस्रुतिः
विद्युत्क्षौमवलाहकस्य रुचिरा कार्कश्ययोग्याराणिः ।
मौर्वी कामशरासनस्य ललिता वाक् श्रोणिबिंबस्य ते
छिन्ना मानिनि मेखला रतिसुखाभ्यासाक्षमाला कथम् ? ॥

अथवा किमत्र ज्ञेयम्—

विस्रंभाच्च हृतांशुकस्य शयने प्रीत्येक्षितस्य प्रिये-
णोन्मत्त(न्मुक्त) द्विरदेंद्रमस्तकवपुर्लीलोदयालम्बिनः ।
स्पर्शावाप्तिकुतूहलस्य जघनस्यावल्गतस्ते ध्रुवं
तन्त्रीछेद इवाकरोद्विरसतां ताम्राक्षि काञ्चीपथः ॥

कथमधोमुखी स्थिता । कथं नास्ति प्रतिवचनम् । इदं गम्यते । किं ब्रवीषि— "न गन्तव्यं" इति । हन्त ! एषाऽस्मि म-

मन्त्रावरुद्ध इव भुजंगमोऽजंगमः संवृत्तः । कथं व्रजामि । एष ध्वस्तोऽस्मि । (परिक्रम्य, कर्णं दत्त्वा) अये रामदासीगृहे स्त्रीप्ररुदितमिव । इह खलु बहुभिः कारणैरुपपद्यते । तत्र केन खलु कारणेनैषा रोदितीति । कुतः—

स्यात् कोपाद्रुदितस्वरः सरभसो दैन्यात्तथा शीकरो
विच्छिन्नः प्रणयाद् भयेन विरसो हर्षोदयाद् गद्गदः ।
मन्ये क्रोधवशंगता प्रणयिनी ह्येषा सदैन्या तथा
प्रारम्भे रभसं विरामबहुलं मन्दं तथा रोदिति ॥

आशङ्कते रामदासीमेव मे हृदयम् । प्रविशामस्तावत् । (प्रविष्टकेन) सैवेयम् । सैषा मां दृष्ट्वा भृशतरं प्ररुदिता ।

अस्या नेत्रान्तविभ्रष्टाः कोपसर्वस्वसंभृताः ।
प्रियापराधगणनां कुर्वन्तीवाश्रुबिन्दवः ॥

(उपेत्य) मानिनि किमिदम्—

आपूर्याभिनवाम्बुजद्युतिहरे नेत्रे प्रयातोऽधरं
तद्भ्रष्टः कठिनौ गतः स्तनतटौ तत्राप्यलब्धास्पदः ।
बाष्पस्ते तनुरोमराजिलुलितः शोकप्रसंगोज्झितः ।
नाभिं पूरयति प्रियाङ्गुलिमुखप्रक्षेपलीलोचिताम् ॥

न खलु कृतमात्मनः सदृशं कुञ्जरकेण । किं ब्रवीषि— "एवं परयुवतिचिह्नितोष्ठो मामभिगतः, उपालभ्यमानश्च मया रोषच्छलेन निर्गतः, अद्य बहून्यहानि नावर्तत" इति । ह ह ह ! अहो अपराधसंमर्दः । सर्वथा एकेनाप्यपराधकारणेन तक्षिणं कुलोत्सादनकरं दण्डमर्हति, किं पुनरेतेषां सन्निपातेन । तदेवमपि तु गते बद्धमेघयूथं

कालमवेक्ष्य सहामहे दुर्जनस्यावलेपम् । संप्रति पार्थिवानामपि तावदन्योन्यबद्धवैराणां प्रतिनिवृत्ताः कलहाः । किं पुनः शिरीषकुसुमसुकुमारचित्तस्य कामिनीजनस्य । यदि ते मद्वचनं प्रमाणं भवति कालमवलोक्याद्यैव प्रियोऽभिसारयितव्यः ।

शर्वर्यामवगाढ हर्म्यशिखराल्लग्नावलंबांबुदा-
न्मार्गं भीरु गृहप्रणालिसलिलोद्गारस्वनापूरितम् ।
कान्तं प्राप्य ततः पयोदपवनैरुद्वेपिताङ्ग्या त्वया
वक्त्रोष्मापहृतोष्ठकम्पविशदं रत्यन्तरे कथ्यताम् ॥

कथमुद्भिन्नरोमाञ्चौ कपोलतलौ वचनस्य नः प्रतिग्रहं निवेदयतः । साधयामस्तावत् । (परिक्रम्य).

अये एषा खलु सा रतिसेना गर्भगृहावरोधजनितस्वेदबिन्दुसेकेनार्धोन्मीलितचारुनयनाविप्रेक्षितेन कपोलपार्श्वलग्नमूर्धजेन मुखेन नूनं सावशेषमदा सांप्रतमेव प्रतिबुद्धा । तथा हि गवाक्षमारुतस्यात्मानमुपनयति । रमणीयायां खल्ववस्थायां वर्तते । अभिभाषिष्ये तावदेनाम् । (अभिगम्य) वासु सुभगा भव । त्वां ह्यल्पावशेषमदां सावशेषसन्ध्यारागमिव प्रतीचीं दृष्ट्वा दिशं प्रस्रस्तशरासनः कुसुमायुधोऽपि तावद्व्याकुलतां गच्छेत् । किमङ्ग पुनरन्यः ।

प्रणष्टा न व्यक्तिर्भवति वचसः सैव मृदुता
न रागो नेत्राब्जे त्यजति न च लज्जा व्यपगता ।
स्मृतिः प्रत्यायाता परिहृषितमद्यापि च मुखं
मदो दोषाँ स्त्यक्त्वा त्वयि परिणतस्तिष्ठति गुणैः ॥

रतिसेने विसर्जयितुमर्हति भवती माम् । नाहं प्रारम्भस्त्वांमोक्तुमुत्सहे । कथं प्रहस्यावघाटितो गवाक्षः । हन्त ! विसृष्टाः

सः । (परिक्रम्य) हन्त ! विमनाः खल्वसि अतिक्रान्तः । इयं हि प्रद्युम्नदासी प्रसक्तसुरतग्लानकपोलेनात्यायतनयनसञ्चारेण तिलकावभेदपिञ्जरीकृतललाटोद्देशेन विलुलितालकशोभिना लग्नमिव रतिपरिश्रममुद्वहता वदनेन जघनबिम्बांशुकान्तरदृश्यमानाभिरभिनवनखक्षतराजिभिर्विमलसलिलान्तर्गताभिरिव फुल्लाशोकच्छायाभिः सुरतावमर्दमृदितमण्डना अवसितसमरशिथिलाकल्पेव नागवधूः प्रवातदीपमिव पाणिना प्रच्छाद्याधरोष्ठं अनुयातकिशोरीव पदात्पदशतं गच्छन्ती वेशमार्गमलङ्कुरुते । इष्टा नः कामिनी । परिहसिष्यामस्तावदेनां (उपेत्य) वासु किमिदं प्रियदशनपदाधिष्ठितस्य दशनवसनस्य सव्रणस्येव योधस्य श्लाघ्यं वपुश्छाद्यते । कथं प्रहसिता । हा धिक्कृत एव नः पौरोभाग्येन दोषः । अस्या हि । मन्दारम्भेणापि प्रहसितेन विकृतमेव दन्तक्षतेषु । कुतः—

सीत्कारोत्पतितस्तनी स्तनतटोत्क्षेपातिनिम्नोदरी
भ्रूभेदाञ्चितलोचना क्षतरुजाधूताग्रहस्तांबुजा ।
यद्यन्यापि समाक्षिपेज्जनमनांस्येवं प्रहस्याङ्गना
कामिन्या हसितव्यमेव तु भवेद्दष्टाधरोष्ठे मुखे ॥

किं ब्रवीषि— "चिरस्य खलु भावो दृश्यत" इति । अनेन दुर्दिनपातकेन गृहबन्धनेऽस्मिन्निरुद्धः कृतः । अथ भवत्या कोऽनुगृहीतः ? किमाह भवती "रामिलकस्योदवासितादागच्छामि" इति । सदृशः संयोगः स्थावरोऽस्तु । अहो ? एकेन खलु रामिलकेन मदनाप्रहारो हृतः । कुतः—

सफलं तस्य कृशोदरि युवत्वमसमस्तविहसितं यस्ते ।
सार्धशशाङ्कच्छायं चषकमिव मुखं समापिबति ॥

वासु दुर्विहगेभ्यो रक्षितव्योऽधरः । गम्यताम् । साधयामो

वयमपि । (परिक्रम्य) अये इदं तदध्वनीकभयात् कुंभकर्णवदनमिव नित्यनिमीलितभवनद्वारं यत्र धूर्तद्वयं प्रतिवसति विश्वलकः सुनन्दा च । विश्वलको हि भक्षितसर्वस्वो नग्नश्रमणक इव शरीरमात्राव-शिष्टः केवलं प्रियगणिकत्वादागतकोशोपद्रवामपि सुनन्दां वायस इव ग्रामोपान्तं न मुञ्चति । सापि चात्र प्रोषितयौवना कान्तारशुष्क-नदीव कस्यचिदनभिगम्या विश्वलकं किलानुवर्तते । तन्नयुक्तमेतद्द्व-न्द्वमनभिभाष्यातिक्रमितुम् । अयमाक्रन्दः क्रियते । कोऽत्र भरते ? (कर्णं दत्वा) भोः प्रयातस्येवाश्वस्य खुरपुटनिपातध्वनिः पादोत्क्षे-पसमये काष्ठपादुकाशब्दः श्रूयते । सन्निहितेनात्र विश्वलकेन भ-वितव्यम् । हन्त ! स एवैष विरौति । भोः किं ब्रवीषि— "क एष गर्दभव्रतमनुतिष्ठति" इति । अहं यमदूतः सुनन्दार्थमागतः । कथमस्मत्स्वरमभिज्ञाय तूष्णींभूतः । अंघो न प्रयच्छासि द्वारम् । तेन हि स्थिरीक्रियतामात्मा । एष शापाग्निमुत्सृजामि ।

लीलोद्यतस्य कलहे नूपुरसंक्षोभनिनदमुखरस्य ।
दूरीभवतु शिरस्ते विलासिनीवामपादस्य ॥

एतदपावृतद्वारम् । प्रविशामस्तावत् । (प्रविष्टकेन)

किमाह भवान् —"किं न दयिताः स्मो भावस्व; युक्तं नामेदृशं शापोत्सर्गं कर्तुं" इति । सम्यगभिहितम् । ईदृशो हि शापो ब्र-ह्मलोकमपि कंपयेत् । किं पुनर्भवन्तम् । तदिदानीमस्य शापस्य प्रती-कारार्थं प्रायश्चित्तम् । कुतः—

विकचनवोत्पलतिलका ससंभ्रमोत्क्षेपचञ्चलतरङ्गा ।
तस्यै देया मदिरा या हृदयकुटुम्बिनी भवतः ॥

एवमुपविशामः । (उपविश्य) कृतं पाद्येन । कुसुमपुरराजमार्गो

द्दि निष्पङ्कतया हर्म्यतलान्यप्यतिशेते । न खलु मे पादौ दुर्ललितौ कर्तव्यौ । किमाह भवान्— "विष्णुदासप्रभृतीनां गोष्ठिकानां रामिलकगोष्ठके समागतानां परस्परविवादरम्याः केचित्संशयाः प्रवृत्ताः कामतन्त्रे । तांश्च यदा कात्स्न्र्येन न शक्नुवन्ति वक्तुं ततोऽस्म्यहं तैरात्मदर्शनं श्रावयितुमभ्यर्थितः । तत्र मयापि स्वदर्शनमुक्तम् । इच्छेयं तावद्देविलकभावमपि तमेवार्थं श्रावयितुम् । तत्र यद्भावो वक्ष्यति तन्नः प्रमाणं भविष्यति । एतमर्थं भवन्तं श्रावयितुं गृहमेवागन्तुमनाः । अथ भावेन स्वयमेवात्मा दर्शितः । यदि तावद्भावः क्षणिकः ततः प्रवक्ष्यामि" इति । आज्ञापयतु भवान् । अवहितोऽस्मि । शक्तितो वक्ष्यामः । अयन्तु दुर्ललित इव दारकः कुटीप्रदेशं न मुञ्चति वायुः । अतश्चिराध्यासं न शक्नोमि कर्तुम् । यद्यभिरुचितं भवते परिक्रान्तावेव संभाषिष्यावहे । विस्तीर्णेयं गोष्ठीशाला । किं ब्रवीषि— "एवं नास्ति दोषः" इति । (उत्थाय) ब्रवीतु भवान् । किं ब्रवीषि— "यद्यर्थमेव वेश्यानां पुरुषैः सह संबन्धः कथं तासामुत्तमाधममध्यमत्वं विज्ञेयं" इति । भोः दानं नाम सर्वसामान्यं वशीकरणं लोकस्य, विशेषतस्तु वेशवधूनाम् । तथापि विद्यते विशेषः । कुतः ? अपि चोक्तं परापरज्ञैः—

दानाद्रागमुपैति वेशयुवतिर्निष्कारणाद्राधमा
मध्या रूपमवेक्ष्य यौवनयुतं दानेन वा हृष्यति ।
दातारं विगतस्पृहं सुवयसं रूपाधिकं चैव भो
दाक्षिण्येन विभूषितं खलु नरं नार्युत्तमा सेवते ॥

किं ब्रवीषि— "कामयमाना वेश्या कथं विज्ञायेत" इति । तद्वक्ष्यामः, श्रूयताम्—

कान्ता नेत्रार्धपाता वदनरुचिकराः सस्मिता भ्रूविलासाः
साकारा वाक्यलेशाः सहतलनिनदा हृष्टनष्टाश्च हासाः ।

नाभीकक्षस्तनानां विवरणमसकृत्स्पर्शनं मेखलानां
श्वासायासाश्च दीर्घा मदनशररहतां कामिनीं सूचयन्ति ।

किं ब्रवीषि— "तत्र कामलिङ्गानि बहूनि ब्रुवते 'शठप्रायत्वाद्वेश्याजनस्य निष्ठोच्चितत्वात् ? क एतच्छ्राद्धास्यन्तीति' तत्कामयमाना कथं विज्ञेया" इति । श्रूयताम्—

सास्रा निश्वासाः स्नेहयुक्ता च दृष्टिः
कार्श्यं पाण्डुत्वं स्वेदबिन्दूद्गमश्च ।
क्षीणे द्रव्येऽपि प्रार्थना कामिनीनां
भावासक्तानां भावशुद्धिं वदन्ति ॥

(परिक्रम्य) किं ब्रवीषि— "प्रथमः समागमः केन कारणेन संमोहमुत्पादयति" इति । श्रूयताम्— प्रथमसमागमः खलु कामिनीनामनियोगस्थानम । तत्स्थाने खलु मह्यन्ति तपस्विनः, कुतः—

दुःखा श्लेषयितुं कथा प्रतिवचो लब्धुं च दुःखं ततो
जातेऽपि प्रचुरे कथाव्यतिकरे विस्रम्भणं दुष्करम् ।
विस्रम्भेऽपि सति स्वभावसदृशी दुःखा विधातुं रतिः
सम्यक्प्राप्तरतापि वेशयुवती रज्येत वा नैव वा ॥

किं ब्रवीषि— "केन कारणेन निर्गुणास्वपि दर्शनमात्रकेणैव स्नेहो भवति । तासु च व्यलीकमुत्पादयन्तीषु किं प्रतिपत्तव्यम्" इति । प्रत्यक्षे हेतुवचनं निरर्थकम् । अस्त्येतन्महदवकाशमनङ्गस्य-यासु तु निर्गुणास्वपि रज्यन्ते मनुष्यास्तासु व्यलीकमुत्पादयन्त्यः शीघ्रमेव परित्याज्याः । कुतः—

प्रियविरहे यद्दुःखं सह्यं तद्भवति सत्वयुक्तस्य ।
प्रियजनविमानितानां न रोहति परिक्षतं हृदयम् ॥

किमाह भवान्— "यस्तु नार्याः प्रियो भवति तस्य सा नातिबहुमान्या प्रिया भवति । सापि किं परित्याज्या" इति । न न न । अन्यास्वपि कामिनीष्वायतिं रक्षता स्वञ्च दाक्षिण्यमदूषयता तस्यामपि तस्मिंस्तस्मिन् काले रक्तवद्विचेष्टितव्यम् । कुतः—

ये कामिनीं गुणवतीं च सयौवनाश्च
नारीं नराः प्रणयिनीश्च विमानयन्ति ।
ते भोः कृषीवलवचःपरिदग्धचित्तै-
र्गोभिः समं पृथुमुखेषु हलेषु योज्याः ॥

(परिक्रम्य) किं ब्रवीषि— "यस्तु कृतापराधस्तेन कथं कामिनी समनुनेया" इति । स्थाने खलु संशयः । प्रणयिनीनां हि कोपो विषमज्वर इव दुश्चिकित्सः । तथाप्यवश्यमस्याः कोपप्रत्यावर्तकेन भवितव्यम । सांप्रतकालिकाश्च कामुकाः पादपतनमेवात्रौषधं पश्यन्ति । तन्मया नातिबहुमन्यते । यदा च वृद्धश्रोत्रियाणामपि तत्तात्कठिनकूणितवृद्धकर्कटाकृतयः पादुकाकिणकर्कशाः पुराणघृताभ्यक्तदुर्गन्धाः पादा गृह्यन्ते । कोऽत्राभिमानः पल्लवसुकुमारेषु कामिनीनां पादेषु । अपि च तन्नु दोषवत् । कुतः— पादग्रहणेऽवश्यं बाष्पः संजायते प्रणयिनीनामश्रुविमोक्षे दैन्यं दैन्योत्पत्तौ कुतः कामः । अन्ये तु ब्रुवते— 'शपथकरणैरनुनेया' इति । तदप्यश्लिष्टम । कुलवध्वोऽपि तावत्कामुकानां शपथं न श्रद्दधति । किंपुनर्वेश्याः । या वा श्रद्दध्यात् तया किमनुनेतव्यया भवितव्यम् । उक्तं च—

"ग्रामे वासः श्रोत्रियकथनं परतन्त्रता कृपणभावः ।
आर्जवयुता च नारी पुंसां मदनान्तकारिणः केचित्" ॥

केचिद् ब्रुवते— 'येन केनचिदुपायेन हासयितव्या । हासान्तरि-

तथैर्योभिज्ञातगाधेव नदी सुखावगाह्या भवति' इति । अत्र ब्रूमः । यद्यप्यस्त्येतत् तथापि कोपफलं नावाप्तं भवति । कुतः—

उत्कृष्यालम्बमीषत्प्रतनुनिवसनं नर्तयित्वाधरोष्ठं
तत्कालश्रोत्ररम्यं परुषमपरुषैरक्षरैः श्रावयित्वा ।
यत्कोपाद्वामपादं नवनलिननिभं निक्षिपत्युत्तमाङ्गे
तच्छ्लाघ्यं यौवनार्घ्यं रतिकलहफलं प्राप्तकामा वदन्ति ॥

तस्माद्धास्यप्रयोगेणापि मानयितव्यः स्त्रीकोपः । एवमस्तु । विमृश्यमानेषु स्त्रीणां कोपप्रसादनोपायेषु सद्यो दृष्टफलत्वादवमृश्य चुंबनमेवास्माकं पक्षः । कुतः—

केशेषूत्कटधूपवाससुरभिष्वासज्य वामं करं
हस्तौ द्वावपि दक्षिणेन सहितौ संगृह्य नात्यायतम् ।
यो हर्षः पिबतो बलात्प्रियतमावक्त्रेन्दुमुत्पद्यते
तेनाप्यायितमन्मथो हि पुरुषो जीर्णोऽपि न क्षीयते ॥

किं ब्रवीषि— "यस्तु प्रमाददोषात्प्रियायाः समक्षमेव गोत्रं स्खलयति तस्य भावः किं प्रतीकारं पश्यति" इति । भोः अन्यस्त्रीगोत्रग्रहणं हि महदुपप्लवः कामुकानाम् । आशीविषदष्टस्येवास्य दुःखा प्रतिक्रिया कर्तुम् । मुहूर्तं नाम ध्यानं प्रवेक्ष्यामः । (ध्यात्वा) आ ! दृष्टम्—

धार्ष्ट्यात्सर्वापहारः परिशठमथवा त्रस्तवन्निष्क्रियत्वं
नार्या वाक्यप्रशंसा त्वरिततरमथो हास्यपक्षक्रिया वा ।
अन्यस्मिन्वा प्रयोगो वचसि यदि भवेत्तस्यचान्येन योगो
नानागोत्रग्रहो वा भवति हि शरणं गोत्रवाक्यक्षतस्य ॥

किं ब्रवीषि— नखदशननिपाताः केन कारणेन सवेदना अपि

प्रीतिमुत्पादयन्ति" इति । ह ह ह ! अतिमुग्धमभिहितम् । पश्यतु भवान्— नखदशननिपाताः सवेदना अपि प्रीतिमद्भ्यां सुखमुत्पादयन्ति । कुतः—

यथा प्रतोदोऽप्यहितं करोति अवे हये सारथिसंप्रयुक्तः ।
तथा रतौ दन्तनखावपातः स्पर्शैकतानं हृदयं करोति ॥

(परिक्रम्य) किं ब्रवीषि—"कथं वेश्या विरक्ता रक्तेव चेष्टमाना विज्ञेया" इति । अथ भोः कोऽत्र संशयः । एष एवोपदेशः— अनुरक्तायां रागो भावयितव्यः । यथा चोपदिष्टम् । पश्यतु भवान् । आकारसंवरणं हि महात्मानो न शक्नुवन्ति कर्तुम् । किंपुनरकठिनहृदयाः स्वल्पावगताः स्त्रियः । कुतः— आकार एवावेक्षितव्यः । किं ब्रवीषि— "कथं" इति ।

व्यर्थं प्रभ्रयते तदन्यकथिते सावेगमुत्तिष्ठति
मोक्तुं न प्रतिबुध्यते न कुरुते स्त्रीत्वोचितां वामताम् ।
गाढं प्रत्युपगृह्य मुञ्चति मुहुः खिन्ना नियुक्ते रतौ
रागान्ते निपुणेऽपि वन्ध्यकुसुमा ज्ञेया लतेवाङ्गना ॥

किं ब्रवीषि— "विरागं समुत्पन्नं कथं चिकित्सितुं शक्यं उताहो अप्रतीकार एवैष भावः" इति । शृणोतु भवान्— रागोत्पत्तिः खलु द्विविधैव भवति कारणादकारणाद्वा । तत्र कारणोत्पन्नस्य रागस्य कारणादेव विरागो भवति । एवमकारणोत्पन्नस्याकारणादेव । एवं रागविरागयोर्वैषम्ये किमिव शक्या प्रतिक्रिया कर्तुम् । मन्दीभूते तु रागे या प्रतिक्रिया तां वक्ष्यामः—

अन्यस्त्रीसेवनं वा रतिविकृतिरथो धीरता विग्रहो वा
क्षान्तिः काले सहास्या वचननिपुणता बन्धुपूजा स्तुतिर्वा ।

कैतव्याजप्रवासः पुनरागमनं साहसोपक्रमो वा
दानं वा कामिनीनां परिचयशिथिलं रागमुद्दीपयन्ति ॥

अपि च, शृणोतु भवान्—

बाला बालत्वाद् द्रव्यलुब्धा प्रदानैः
प्राज्ञा प्राज्ञत्वात्कोपना सान्त्वनाभिः ।
स्तब्धा सेवाभिर्दक्षिणा दक्षिणत्वात्
नारी संसेव्या या यथा सा तथैव ॥

(परिक्रम्य) किं ब्रवीषि—

"दर्शयति कामलिङ्गं वदत्यलमिति न गच्छति समीपम् ।
या स्त्री विहरति काले सा कर्तव्या कथं वश्या" ॥ इति

साध्वभिहितमेतत् । प्रथमं तावत्कामिना ज्ञेयः स्त्रीस्वभावः । एष एव स्त्रीस्वभावः स्यात् । किन्तु यावज्जीवितमपि गर्विता निरुपायं न शक्या वशमुपनेतुम् । यत्तु स्त्रीणां रहस्यं तदिदमुद्घाट्यते ।

शून्ये वा संप्रमर्द्य द्विरद इव लतां यो हरत्याशु नारीं
मत्तां वा यो विदित्वा अभिभवति शनै रञ्जयन्वाक्यलेशैः ।
अन्यं कृत्वोपाधिं वा च्छलयति कुरुते भावसंगूहनं वा
तस्यैतच्चेष्टितं भो न भवति विफलं वामशीला हि नार्यः ॥

(परिक्रम्य) किं ब्रवीषि—

"गते तु कोपे प्रथमे समागमे
प्रवासकाले पुनरागमे तथा ।
वदन्ति चत्वारि रतानि कामुकाः
ततो भवान् किन्न्वधिकं व्यवस्यति" ॥ इति ।

अत्र ब्रूमः—यत्तावत्प्रथमसमागमे रतं तदप्यलब्धविस्रम्भायां कामिन्यामज्ञातगाधमिव सरः शङ्कावगाहं भवति । यदपि प्रवासकाले रतं तदपि तच्छोकाभिभूतत्वान्मन्दरागायाः सास्राविलाक्षमुपोह्यमानहृदयोद्वेगक(का)रणं रम्यं (अरम्यं) करुणं ग्रहोपसृष्टं चन्द्रमण्डलमिव न मां प्रीणयति । यदपि प्रवासादागते रतं तदप्यकृतप्रतिकर्मतया प्रियया व्रीळितया व्यंजितं दुर्दिनगान्धर्वमिव मन्दरागं भवति । यत्पुनः कोपापगमादागतं तत् सुरासुराविद्धमन्दरपीडिते सर्वौषधिप्रक्षेपाप्यायितवीर्ये भगवति सलिलनिधौ यदुत्पन्नममृतसंज्ञकं किमपि श्रूयते आयुर्वयोऽवस्थापनं रसायनं तदप्यतिवर्तते । कुतः—

कोपापगमे नार्यास्तमेव हृदयेन भावमजहन्त्याः ।
सुरतमतिरभसमनिभृतकररुहदशनपदजर्जरं भवति ॥

(परिक्रम्य) किं ब्रवीषि— "वेश्यावञ्चितं पुरुषं परिहसन्ति धूर्ताः । कथं वेश्यावञ्चनं न प्राप्नुयात् कामुकः" इति । भो वेश्या लिपिकारश्च छिद्रप्रहारित्वात् तुल्यमुभयम् । तत्र लिपिकारोऽप्यास्ते हस्तगतकल्पं कृत्वा मुहूर्तमवस्थानं प्रापयति । वेश्या पुनर्वातरोग इवात्यर्थव्ययमुत्पादयति । यदि मच्चरितानुगामी भवेत् तेन वेशः प्रवेष्टव्यः । मया हि—

विस्रंभो गतयौवनासु न कृतो बालाः परीक्ष्य स्थितं
दूरादेव समातृकाः परिहृता नद्यः ससत्वा इव ।
मन्युर्नास्ति विमानितस्य न पुनः संप्रार्थितस्यादरो-
वेशे चास्मि जराङ्गतो न च कृतः स्वल्पोऽपि मिथ्याव्ययः ॥

(परिक्रम्य) किं ब्रवीषि— "नार्योर्युगपदागमे का प्रतिपत्तव्या का परित्याज्या कालवर्धितप्रणयिनी उताहो नवप्रणयिनी ? एवं प्र-

र्श्नं वदतु भाव:" इति । कष्ट: खल्वयं प्रश्न: । दुर्वचो मा प्रतिभाति । किमत्र भवान् पश्यति ? किमाह भवान्—"न किञ्चिदप्यत्र पश्यामि । महत्त्वेतत्सङ्कटम । भाव एव वक्तुमर्हति" इति । तेन हि श्रूयताम —

रूढस्नेहान्न युक्तं नवयुवतिकृते स्वां प्रियां विप्रमोक्तुं
तत्प्रीत्यर्थं न हेया स्वयमभिपतिता कामिनी जातकामा ।
तत्रोपेक्षैव कार्या व्रजति परिचिता यावदुद्भूतकोपा
शून्ये प्राप्य द्वितीयामथ तदनुमते संप्रसाद्या प्रियैव ॥

(परिक्रम्य) किं ब्रवीषि— "वेशे सञ्चरता दर्शनमात्रकेणैव कथं शक्यं ज्ञातुं स्त्रीणां रहोनैपुणं" इति । नास्ति किञ्चिन्निपुणस्याज्ञेयम् । स्त्रियं खलु दृष्ट्वा पुरुषेणैव दृष्टिरेव प्रथमं परीक्ष्या भवति । चक्षुषि हि सर्वे भावा नियता: । पश्यतु भवान्—

सकेकरा मन्दनिमेषयुक्ता तिर्यग्गता स्नेहवती विशाला ।
दैन्येन हीना चलतारका च स्त्रीणां रहोनैपुणमाह दृष्टिः ॥

अपि च, यस्याश्चाभुग्नमषित्प्रतनुकपोलं भ्रूसञ्चारि तिर्यक्कटाक्षमाननं तस्या रतिकार्कश्यं यस्यात्राश्याम(न)मूलोऽधरः सदन्तनखपदं शरीरं प्रविरलहसितञ्च मुखं तस्या निर्विशङ्कमेव रतिशौण्डीर्यमवगन्तव्यम् । यां वा भवान् पश्यति कटिप्रदेशविन्यस्तवामहस्तां प्रलम्बदक्षिणकरामेकपार्श्वोन्नतजघनां तस्यामप्यास्था कार्या । नह्येवमगर्विता तिष्ठति । याश्च निवसनान्तावृतैकपयोधरां स्वगृहदेहळीविलग्नैकरुचिरचरणां द्वारबाह्यावरुद्धशरीरां पश्यति स खलु स्त्रीमय: पाश: । चारुलीलात्वमेवास्या: सर्वं कथयति । या वा कवाटगोस्तनतटकमालम्ब्य प्रकटीकृतबाहुपाशा शिथिलीकृतनीवीबन्धना सन्दर्शितनाभिहृदा दृश्यते तस्या माकृतिरतिपूर्वरंगाया मननुमेयं न वि-

द्यते । शक्यमत्र बह्वपि वक्तुम् । संक्षेपस्तु श्रूयताम्—

यस्यास्ताम्रतलाङ्गुलिः शुचिनखो गण्डान्तसेवी करो
वाणी साभिनया गतिः सललिता प्रस्पन्दितोष्ठं स्मितम् ।
लोला दृष्टिरशङ्कितं मुखमधोनाभेश्च नीवीक्रिया
तां विद्यान्नरवागुरां रतिरणे प्राप्ताग्र्यशौर्यां स्त्रियम् ॥

(परिक्रम्य) किं ब्रवीषि— "द्विविधमेव स्त्रीणां कामितं भवति प्रकाशं प्रच्छन्नञ्च । तयोः कतरद्व्यतिरिच्यत" इति । भोः यत्प्रकाशं तद्वेशवधूष्ववोपपद्यते । कृतकमपिचैतद्भवति । यत्विदं प्रच्छन्नं तत्कुलवधूषु वेशवधूषु च । यत्केवलमनुरागादुत्पद्यते विशेषतश्चैतदल्पदोषत्वाद्वेश्यावधूष्वेव रम्यं भवति । दुर्लभत्वादपि पुरुषाणां कुलवध्वस्तु यं कञ्चित्कामयन्ते । वेश्यया तु न सर्वः काम्यते । स्यान्मतं कस्यचित्— 'निर्दोषमदनत्वाद्वेश्यानां प्रच्छन्नकामितेन किं प्रयोजनं' इति । अत्र ब्रूमः— पूर्वसंस्तुतो राजवल्लभः कृतोपकारो भक्तिमाननृशंस इत्येते वेश्याजननीसेवकाः । एतेषामवश्यमकामयमानापि वेश्यानुविधेया भवति । किन्निमित्तं ? प्रयोजनार्थमिति । तस्माद्वेश्यया प्रच्छन्नमदनार्थिन्या यः काम्यते तेन जन्मजीवितयोः फलमवाप्तं भवति । किञ्चान्यत् यत्तावद्विरहमासाद्य स्वयं दूतीनां प्राञ्जलिपुरस्सराणि सबाष्पगद्गदानि वाक्यानि श्रूयन्ते ननु तान्येव तस्य पर्याप्तानि भवन्ति । या वा तध्यानपरा रोगव्यपदेशेन गता पाण्डुभावं चन्द्रोदये रोदिति प्रजागराभिताम्रनयना कामिनी शिथिलीकृतभूषणा 'दिष्ट्या त्वदर्थमेव निर्घृण शरीरस्येयमवस्था, भद्रं तवास्तु' इति स्वयमुपालभमानायाः, कान्त याचे त्वा दयस्व मे शरीरस्येति सीत्कारानुबद्धाक्षराणि शृण्वतः त्वरस्व मा मैवं इति दशनकररुहैर्विचोद्य रदमानाया अहमेवं विधा श्रद्दधातु भवान् मया च शापित इत्येवं चोक्तानि रसायनप्रयोगातिवर्तकानि वचांसि चिन्तयतो म-

दर्थमेवेयमीदृशी संवृत्तेति कारणतो दूतीवचनाच्चोपलभ्य पुरुषस्य कारुण्यमिश्रा या प्रीतिरुत्पाद्यते तत्सदृशीं यदन्यां ब्रूयात् विटभावामिमं परित्यज्य श्रोत्रियैः समतां गच्छेयम् । अपि च,

हस्तालम्बितमेखलां मृदुपदन्यासावभुग्नोदरीं
लब्ध्वापि क्षणमागतां समदनां सङ्केतमेकां निशि ।
यो नारीं स्थित एव चुम्बति मुखे भीताञ्चलाक्षीं प्रियां
तस्येदं स्वभुजात्तपङ्कजमयं छत्रं मया धार्यते ।। अपि च,

त्वरस्व कान्तेति भयाद् ब्रवीति यं कामिनी चोरितसंप्रयोगा ।
क्रीतास्तया तस्य भवन्ति पुंसः प्राणा यथेष्टं परिकल्प्य मूल्यम् ॥

(परिक्रम्य) किं ब्रवीषि— "रूपवती च स्त्री दक्षिणा चेति तयोः कस्यां प्रीतिविशेषं भावः पश्यति" इति । उभयमेतत्स्त्रियं भूषयति । यत्तावद्विरूपायां दाक्षिण्यं तदन्धकारनृत्तमिव व्यर्थं भवति । रूपमपि दाक्षिण्यहीनमटवीचन्द्रोदयइव कां प्रीतिं करिष्यति । मां प्रतिरूपाद्दाक्षिण्यं भवति प्रधानम् । कुतः ? दाक्षिण्यं विरूपामपि स्त्रियं भूषयति सुरूपामप्यदाक्षिण्यं दूषयति । दृश्यन्ते हि पुरुषाः सुरूपा अपि स्त्रियः परित्यज्य विरूपास्वपि दक्षिणासु रज्यमानाः । रूपवत्या चावश्यं स्तब्धया भावितव्यम् । स्तब्धता च कामस्य महान् शत्रुः। अनुवृत्तिर्हि कामे मूलम् । सा च दाक्षिण्यात्संभवति । यदि रूपमात्रं कारणं स्याच्चित्रनार्यामपि प्रयोजनं निर्वर्तयेत् । दाक्षिण्य एव रूपगुणं हित्वा सर्व एव गुणसमुदायोऽन्तर्भूतः । कुतः—

सुवाक् सुवेषा निभृता गुणज्ञा भावान्विता नापि च दीर्घकोपा ।
अलोलुपा छन्दकरी च नित्यं दाक्षिण्ययुक्ता भवती च नारी ॥

किमाह भवान्— "वेश्याः कृतकोपचरित्वात्सतामनभिगम्या भवन्तीति ब्रुवन्ति । तत्कथं" ? इति । इह खलु काम्यैर्विशेषैरुप-

चरणमुपचारः । एतच्च स्वभावतो नार्या द्वे च लभ्येते । वेश्यायां क्रियानिष्पत्तेः (?) । स्यान्मतं—यच्छाठ्यादुपचर्यते तत्कृतकमिति तदप्य दोषः । कुतः ? शाठ्यादप्युपचारः प्रयुक्तः प्रीतिमुत्पादयति । आर्जवादप्युपचारः स्खलीकृतः कस्य प्रीतिं जनयति ? शाठ्यं नामार्थनिर्वर्तको बुद्धिविशेषः । आत्मार्थप्रधानया च स्त्रिया पुरुषविशेषोऽवश्यं मृगयितव्यः । या च पुरुषविशेषज्ञा स्त्री तस्यां रज्यन्ते पुरुषाः । अपि च,

नीचैर्भावः प्रियवचनताक्षमा नित्यमप्रमादश्च ।
शाठ्यादुत्पद्यन्ते केनैतद् दूष्यते लोके ॥

किं ब्रवीषि—"विसंवादितं हि शठायाः सारम् ? । विसंवादितस्य कामिनः प्रियया दुःखमुत्पद्यते । नास्ति तस्य प्रतिक्रिया" इति । भोः सर्वं खलु कारणमभिसमीक्ष्य विसंवाद्यते । यस्तु न शक्नोति तत्कारणं परिहर्तुं ननु तस्यैव सोऽपराधः । अनैकान्तिकश्च विसंवादने दोषः । दृश्यन्ते बहवो विसंवादिता भृशतरमनुरज्यमानाः ।

आवल्गितस्तनतटानि च बाष्पमिश्रा
भावाभिधानपटवश्च कटाक्षपाताः ।
अव्यक्तशोभितपदाश्च भवन्ति वाचः
शाठ्यात्सतोऽपि गुणवत्परिकल्पयन्ति ॥ ?

किं ब्रवीषि — "वेश्याभ्यो यद्दीयते तन्नष्टं इति बहवो ब्रुवन्ति । दत्तकेनाप्युक्तं 'कामोऽर्थनाशः पुंसां' इति । तत्र भावः किं पश्यति" इति । भोः अर्थस्य त्रय एव विषयः—दानमुपभोगो निधानमिति । तत्र दानोपभोगौ प्रधानौ निधानन्तु गर्हितम् । कुतः—

निधौ कृतेऽर्थे न हि विद्यते फलं भवत्यतुष्टिर्विफलीकृते पुनः ।
ततो निधानं हि न युक्तमागतं स्फुरत्तुरङ्गस्य जवोपमं धनम् ॥

अर्थधर्मौ शरीरसुखमुत्पादयतः । तत्रेष्टानां शब्दादीनामवाप्तिः सुखमित्युच्यते । तच्च वेश्याजनमुपसेवमानो यथावत्प्राप्नोति । सर्वशब्देषु तावद्विशेषतः प्रियवचनं निर्वृतिकरं भवति । तच्च वेश्याजनो ब्रवीति । न तथान्यः । कथमिव--

प्रियं प्रियार्थे कटुवा प्रियार्थे वदन्ति काले च मितश्च वेश्याः ।
वदन्ति दाक्षिण्यधनाः कदाचिन्नैवाप्रियं न प्रियमप्रियार्थम् ॥

यस्यानिभृतमविषमोरुनितम्बमुद्धृतांशुकमाविद्धमेखलाकलापं वेश्याजघनमभिवाहयतः स्पर्शाः संभवन्ति । किन्न तत्कृते प्राणानपि परित्यजन्ति, किं पुनर्धनम् । सर्वेभ्यश्च रसेभ्यः पानं गर्हितमिव लक्ष्यते तस्यापि वेश्याविशिष्टत्वादुपभोगो रम्यो भवति । पश्यतु भवान्--

ससंभ्रमोद्धूतविघूर्णितां वा पीतावशेषां मुखविच्युतां वा ।
ओष्ठोपदंशां मदिरां निपीतो यो वेशमध्ये सरसं विवेद ॥

येन वार्धनिमीलिताक्षीणि प्रस्पन्दिताधराणि आयतभ्रूलतानि स्विन्नकपोलान्याननानि वेश्याजनस्यावलोकितानि तस्य चक्षुषः फलमवाप्तं भवति । अपि च,--

केशान्तः स्नानरूक्षो विरचितकुसुमः केशहस्तः पृथुर्वा
वस्त्रं वा भुक्तमुक्तं परिमलसुरभिः पद्मताम्रोऽधरो वा ।
वेश्यायास्ताम्रनेत्रं मुखमुदितमदं चन्दनार्द्रा तनुर्वा
येनाघ्रातानि तस्य ध्रुवमभिपतितो घ्राणमार्गेण कामः ॥

न त्वस्माकं धर्मेऽधिकारः । तथापि तु यथा धर्मावाप्तिर्भवति तथा वक्ष्यामः । इह हि कृतघ्नता सर्वपापीयसी । स च ततः कृतघ्नतरः यो वेश्यावधूभ्यः सुखमीप्सितमनुपममवाप्य ताभ्यो न प्र-

त्युपकुरुते । यदि कृतज्ञो भवति तस्य हस्ते स्वर्गः । तस्मात् स्वर्ग-सुखावाप्त्यर्थं निर्विशङ्केन वेश्याभ्योऽवश्यं वित्तं दातव्यम् । किं ब्रवीषि—"दाक्षिण्ययुक्तायामपि कुलवध्वां केन कारणेन तादृशो न भवति यादृशो वेश्यायां" इति । श्रूयतां—दाक्षिण्यविषयस्तावदन्यः कुलवध्वा मन्य एव वेश्यायाम् । ऋजुस्तु कुलवधूर्यदि तावत् प्रियं वदति अकाले वा वदति अतीव प्रियमिति वा विप्रियं वदति । एवं सर्वत्र । कामश्चेच्छाविशेषः । प्रार्थना चेच्छा । प्रार्थना चा-संप्राप्तेरुत्पद्यते । सा च वेश्यायां स्वाधीनप्राप्तायामपि मात्सर्यादुत्प-द्यते । बहुसाधारणत्वात् । मात्सर्यं च लोभं जनयति । तस्माल्लब्धा-वकाशो वेश्यायां कामो न व्यपैति । काममूलश्च रागः । अपि च—

वेश्याजघनरथस्थः कुलनारीं कः स चेतनो गच्छेत् ।
नहि रथमतीत्य कश्चिद्गोयानेन व्रजेत्पुरुषः ॥

किं ब्रवीषि—"लोकस्य वेश्यां प्रतिसक्तो मनुष्यः पूज्यो न भ-वति । संमतिश्च तस्य नेष्टा । यत्र च गुणा दृश्यन्ते तत्किमर्थं नानुष्ठेयं" इति । अतिविटत्वमभिहितम् । मुहूर्तमवधानं दीयताम् । (ध्यात्वा) इह हि द्विविधा पूजा भवति । फलवत्यफला च । तत्र याफला नग्नस्येव चेष्टितं भवति हास्यम् । वेश्यायामप्रसक्तस्य किं फलमिति । स्यान्मतं 'अयशस्यो वेशप्रसङ्गः' इति । तन्न ग्राह्यम् । सर्वो हि सुखिनं द्वेष्टि लोकः । यथा च परस्त्रियो न गम्या इति प्रतिकण्ठमभिहितं न तथा वेश्याः । स्यान्मतं—'स्त्रीषु प्रसङ्गो न श्रे-यान् वेश्याश्च स्त्रियः' इति । अत्र ब्रूमः । न तु स्त्रीष्वायत्तो लोको दूषयितुमर्हति । अपि च,—

प्रागल्भ्यं स्थानशौर्यं वचननिपुणतां सौष्ठवं सत्वदीप्तिं
चित्तज्ञानं प्रमोदं सुरतगुण(वि)धिं रक्तनारीनिवृत्तिम् ।

चित्रादीनां कलानामधिगमनमथो सौख्यमग्र्यञ्च कामी
प्राप्नोत्याश्रित्य वेशं यदि कथमयशस्तस्य लोको ब्रवीति ॥

(परिक्रम्य) किं ब्रवीषि— "यदेतद्‌बृहस्पत्युशनःप्रभृतिभिरन्यैश्च शास्त्रप्रयोक्तृभिरुपदिश्यते—'स्त्रीषु प्रसंगो न कर्तव्यः' इति अत्र भावः किं पश्यति" इति । भोः उपदेशमात्रं खल्वेतत् । तमहं न पश्यामि यः स्त्रीषु प्रसङ्गं न गच्छेत् । श्रूयतन्ते हि— 'महेन्द्राद्‌योऽप्यहल्याद्यासु विकृतिमापन्नाः' । धर्मार्थयोरपि श्रेष्ठो विषयः । इष्टविषयप्रादुर्भावफलत्वात् । विषयप्रधानाश्च स्त्रियः । यो हि वेश्यां परित्यज्य कामोपभोगान् दिव्यान् कामयते तमप्यहं वञ्चित इत्यवगच्छामि । इहापि तावत्तदात्वायत्योस्तदात्वमेव गरीयः प्रत्यक्षफलत्वात् । किं पुनरन्यस्मिन् देहग्रहणे संशयिते तपश्चरणदुरवापे रमणीये (?) पश्यतु भवान्— जलधरनिर्वापितचन्द्रदीपासु द्विगुणतरतिमिरभीमदर्शनासु शिशिरतरपवनासु सलिलपवनदुःसञ्चारासु जलदकालनीलासु रजनीषु मदनशरसन्तप्तयैकाकिन्या कामिन्याभिसारितस्य पुंसो नूपुरस्वनबोधितस्य जन्मजीवितयोः फलमवाप्तं भवति । किमाह भवान्— "नूपुरधारणं हि महदुपकुरुतेऽभिसारिकाभ्यः" इति । एवमेतत् । कुतः—

प्रथमसमागमनिभृतः कथमात्मनिवेदनं जनः कुर्यात् ।
पादस्पन्दनरभसो यदि न स्यान्नूपुरनिनादः ॥

एवं नूपुरशब्दनिबोधितोऽयं जलधरधाराधौतविशेषकमाप्लुताञ्जनाक्षमनवस्थितोष्ठमाननं समदं पीत्वा यद्यवश्चिरा बहूनि कल्पान्तराणि नरकदुःखान्यनुभवति तथापि तस्य युवतिजनप्रणयप्रतिग्राहिणस्तानि श्लाघ्यानि भवन्ति । विगतजलदावकुण्ठनायां विरचितविमलग्रहपतितिलकायां विगतमारुतायामसनकुसुमवासितादिगन्तरायां शरदि सारसरुतसंवादितमेखलास्वनाभिर्बन्धूककुसुमोज्वलविशेषकाभि-

श्चक्रवाकोपदिष्टानुरागाभिः प्रियाभिः सह येन प्रतिबुद्धपङ्कजदीर्घिकासलिलमवगाढं तस्य किं स्वर्गेण । अथवा कुन्दकुसुममिश्रिते फुल्ललोध्रगन्धाविद्धमारुते प्रियङ्गुमञ्जरीक्लृप्तकेशहस्ते प्राप्ते हेमन्तकाले हिमापराधकातरोष्ठीनामधरोष्ठरक्षणीनामपि चुम्बनविवादिनीनां प्रियाणां प्रणयबलात् मुखान्यापिबतो या प्रीतिरुत्पद्यते तस्या नास्त्यौपम्यम् । अथवा कालागरुधूपदुर्दिनेषु गर्भगृहेषु प्रकीर्णातिमुक्तकुसुमेषु तुषारमुक्तावर्षिणीषु परुषपवनासु शिशिरकालरात्रिषु प्रियानुरक्तया पीनाभ्यां स्तनाभ्यामवपीड्यमानवक्षा वरशयनतलोपगतो गाढोपगूहनजनितस्वेदबिन्दुसुरभिगात्रो यः सुरतान्तरेषु निद्रामुपसेवते तेन किं नाम नावाप्तं भवति । अपि च,—

अधरोष्ठरक्षणीनां कचग्रहोत्क्षेपचञ्चलाक्षीणाम् ।
पातव्यानि च तृषितैर्मुखानि सीत्कारसहितानि ॥

निद्राविरहिते स्वर्गे किमवाप्यन्ते । अथवा स्वेदबिन्दुलङ्घनावरुद्धतिलकमार्गेषु प्रवृत्तमदनदूतीसंपातेषु संयोज्यमानमणिरशनेषु दृष्टसहकाराङ्कुरेषु सुरभिपवनेषु वसन्तदिवसेष्वविदितागतया स्वयमेव मुक्तमानया यः प्रिययानुरक्तयानुनेतव्ययानुनीयते तेन नान्येषु स्पृहा कर्तव्या । अथापि यो वा शिरीषकुसुमश्यामिलीकृतस्त्रीकपोले सलिलमणिमुक्ताहारचन्दनोशिरव्यजनपवनोपभोगरमणीये प्रचण्डसूर्यकिरणे निदाघकाले कुसुमशयनशायिन्या नवमालिकोन्मीलितकेशहस्तहस्तया चन्दनार्द्रपयोधरया तालवृन्तमारुतेनोपसेव्यमानो मारुतग्राहिण्युदवसिते प्रियया सह मध्याह्नमतिवाहयति । अथवा गन्धसलिलावसिक्तभूमिभागेषु प्रकीर्णबकुलमल्लिकोत्पलदलेषु मारुतग्राहिषु गृहमध्येषु यो निरुध्यते प्रियया तेनातिपाति यौवनमनुभूतं भवति । अपि च,—

आदष्टस्फुरिताधरे भवति यो वक्त्रारविन्दे रसः
प्रीतिर्या च हृतांशुके च जघने काञ्चीप्रभोद्योतिते ।
लक्ष्मीर्या च नखक्षताङ्कुरधरे पीने कपोले स्त्रियो
रक्तं तेन विरज्यते न हृदयं जात्यन्तरेऽपि ध्रुवम् ॥

अयन्तु तपस्वी लोकः पिपीलिकाधर्मोऽन्योन्यानुचरितानुगामी प्राणापायहेतुभिः स्वयमपरीक्ष्य स्वर्गः स्वर्ग इति मृगतृष्णिकासदृशेन केनाप्यसद्वादेन विकृष्यमाणहृदयो मरुत्प्रपाताग्निप्रवेशनादिभिरन्यैश्च घोरैर्जपहोमव्रतनियमवेषैः स्वर्गमभिकाङ्क्षते । परीक्षितुं नेच्छति परमार्थम् । स्वर्गे सन्निहिताः प्रमादाः श्रूयन्ते । तस्य तस्यां मनुष्यत्वाच्च परस्परविरोधित्वाच्च सुखोत्पत्तिर्न विद्यते । नित्यसन्निहितत्वाच्चाविरहिताः कां प्रीतिं करिष्यन्ति । अन्योऽन्यानभिज्ञत्वाच्च(च्चा) व्यक्तगुणोपभोगेऽप्यसमर्थाश्च भवन्ति । यदपि चात्र सौवर्णानि गृहाणि सौवर्णास्तरवः श्रूयन्ते तद्विबुधानामदाक्षिण्यसर्वस्वम् । यदि तावत्सौवर्णानि गृहाणि सौवर्णास्तरवः केनालङ्क्रियन्ते श्रियः । कोऽत्र विशेषः । कथं भवनविनियोगादुपनीतं कुहकं स्त्रीणां शोभामुत्पादयति । यश्च कामिनीभिः स्वयमेव पुत्रवत्संवर्धितसंमानितानां युवतिकेशहस्तसंक्रान्तकुसुमसमुदायानां गृहोपवनबालवृक्षाणामुपभोगो रम्यो भविष्यति कुतः स जातिकठिनानां कनकतरूणाम्? तारुण्यबद्धकामतन्त्रस्य परस्परदर्शनोत्सुकस्य मदनदूतवचनाभितृषितस्यान्योऽन्यमुपालभ्यमानस्य प्रीतिफलेप्सोः कामिजनस्य या प्रीतिरुत्पद्यते कुतः सा शापभयोद्विग्नस्त्रीजने स्वर्गे ? ये च प्रणयकुपितासु कामिनीषु तत्कालोत्कण्ठानुरूपान् रम्यान् प्रसादनोपायान् मित्रैः सह चिन्तयतः सायामा इव दिवसा व्रजन्ति कुतस्त ईर्ष्याविरहिते स्वर्गे? यस्य (च) भावविनिविष्टांग्यो वक्षःस्थलशायिन्यो वकुलकुसुमनिश्वाससमारुतैर्घ्राणमाघ्रायन्त्यः स्त्रियो निद्रासुखमुत्पादयन्ति कुत-

स्त्विद्राविरहिते स्वर्गे ? यानि वारुणीमदविलुलिताक्षराणि किमपि किमपि लज्जावन्ति प्रियाणि प्रियार्थानि वचांसि स्त्रीणां कुतस्तानि पानविरहिते स्वर्गे ? सुकृतसीत्काराणि श्वसितबहुलान्युपगूहनदूतानि नववधूरतानि कुत एव स्वर्गे ? भोः मां प्रति वरं श्रोत्रियैर्वृद्धैः सहासितुं नाप्सरोभिः । तास्तु दीर्घायुष्मत्यः संस्कृतभाषिण्यो महाप्रभावाश्च श्रूयन्ते । यासु वसिष्ठागस्त्यप्रभृतयो महर्षयः समुत्पन्नास्तासु को विस्रम्भः । पश्यतु भवान्—

शाठ्यमनृतं मदो मात्सर्यमवमतं तथा प्रणयकोपः ।
मदनस्ययोनयः किल विद्यन्ते नैव ताः स्वर्गे ॥

तस्माद्यद्यस्तिकाममव्याहतमनुभवितुं स्पृहा भोस्तेनेहैवरन्तव्यम् । विशेषेण वेशवधूभिः सह । इह हि —

आद्वारादनुगम्य साश्रुवदनं यं प्रेक्षते शंभली
वस्त्रान्ते परिलम्बते यमनृतक्रोधप्रयातं प्रियम् ।
क्रुद्धश्चाप्यनुनीयमानकठिनो यः क्रुध्यते कान्तया
कामस्तेन समुद्धतध्वजरथः सञ्चूर्ण्य संमर्दितः ॥

अये सुनन्दा । किं ब्रवीषि —"सर्वं मयाश्रुतं" इति । हन्त ! विक्रीतपण्याः स्मः । तासु न खलु विप्रलम्भितम । किं ब्रवीषि— "न खलु चन्द्रादन्धकारो निष्पतति" इति । सुनन्दे तवैव सदृशमेतद्वाक्यम् । अत एव त्वयैतदुच्यते । एवमभ्यन्तरं प्रविशाव(मः) । (प्रविश्य) भवति विसर्जयितुमिच्छामि । संप्रति हि—

बध्वा मानिनि मेखलां प्रशिथिलां पीत्वा सकृद्वारुणीं
कृत्वा कान्तकरग्रहप्रणयिनः पुष्पोत्कटान् मूर्धजान् ।
हस्तालम्बितमेखलाभिरसकृत्स्त्रीभिः कटाक्षाहतो
हैमः कूर्म इवावसीदति शनैः संक्षिप्तपादो रविः ॥

किं ब्रवीषि—"न शक्यमद्य त्वयार्धपादमपीतो गन्तुं" इति । भोः गन्तव्यमेव । मे भार्याकळेबरमन्यथा महीष्यति । किमाह भवती—"अहन्तामनुनेष्यामि" इति । राजवद्गुह्यादप्रतिगृहीतानुनय इव दुर्जनो न शक्योऽनुनेतुम् (?) इदं गम्यते । कथं पादयोर्लग्ना सह विश्वलकेन । हन्त! पङ्गूकृताः स्मः । सुनन्दे ।

नत्वाहमतिवर्तिष्ये वेलामिवमहोदधिः ।
इमामपि महीं पातु राजा सागरमेखलाम् ॥

(निष्क्रान्तो विटः)

इति श्री ईश्वरदत्तस्य कृतिः धूर्तविटसंवादो नाम

भाणः समाप्तः ।

---

श्रीरस्तु ।

## वररुचिकृता ।

# उभयाभिसारिका ।

——:०:——

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सू—

कोऽसि त्वं मे कथाहं ते विसृज शठ मम निश्वसनं मुखं किमपेक्षसे
न व्यग्राहं जाने ही ही तव सुभग दशनवसनं प्रियादशनाङ्कितम् ।
या ते रुष्टा सा ते नाहं व्रज चपल हृदयनिलयां प्रसादय कामिनी
मित्येवं वः कन्दर्पार्ताः प्रणयकृतकलहकुपिता वदन्तु वरस्त्रियः ॥

एवमार्यमिश्रान् विज्ञापयामि । अये ! किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग पश्यामि (नेपथ्ये)—

वसन्तप्रमुखे काले लोध्रवृक्षो गतप्रभः ।
मित्रकार्येण संभ्रान्तो दीनो विट इव स्थितः ॥

(निष्क्रान्तः)

स्थापना ।

(ततः प्रविशति विटः)

विटः—अहो ! वसन्तसमृद्धिः कुतः !

परभृतचूताशोका डोला परवारुणी शशाङ्कश्च ।
मधुगुणविगुणितशोभा मदनमपि सविभ्रमं कुर्युः ॥

अहो ! परस्परव्यलीकं सहते कामिजनः । अहो ! अप्रतिहतशासनो भ्रमति दूतीजनः । अहो ! ऋतुकालप्राधान्यम् । प्रवालमुक्तामणिरशनादुकूलपेलवांशुकह्लारहरिचन्दनादीनां वर्धते सौभाग्यम् । सर्वजनमदनजनने लोककान्ते वसन्त एवं विजृम्भमाणे सागरदत्तश्रेष्ठिपुत्रस्य कुबेरदत्तस्य नारायणदत्तायाश्च कश्चित्कलहाभिनिवेशः संवृत्तः । एतत्कारणात्कुबेरदत्तेनात्मनः परिचारकः सहकारको नाम मां प्रति प्रेषितः "भगवतो नारायणस्य भवने मदनसेनया मदनाराधने संगीतके यथारसमभिनीयमाने ततो मामतीव सा त्वया प्रशस्तेति तत्संक्रान्तमदनानुरागशङ्कया परिकुपिता नारायणदत्ता चरणपतनमप्यनवेक्ष्य स्वभवनमेव गता । तद्गतमदनानुरागतप्तहृदयस्य यथा ममेयं रजनी रजनीसहस्रवन्न व्यतिगच्छेत् तथा चास्य नगरस्य सर्वकालवसन्तभूतेन भाववैशिकाचलेन कृतां सन्धिमिच्छामि" इति । श्रुत्वैव तद्वचनमभिज्ञातया मदनदुःखस्याप्यसह्यत्वात्प्रदोष एवाभिप्रस्थितः सन्नस्मद्वयःप्रमाणमगणयन्त्याऽऽत्मयौवनावस्थामेव चिन्तयन्त्यास्मद्गेहिन्याऽन्यथाशङ्कमानया निवारितोऽस्मि । तदेष इदानीं तस्याः कोपविनाशने कृतप्रतिज्ञो गमिष्यामि । अथवा किमत्र मया प्रतिज्ञातव्यम् । कुतः —

मधुरैः कोकिलालापैश्चूताङ्कुरनिबोधितैः ।
वसन्तः कलहावस्थां कामिनी मनुनेष्यति ॥

अपि च —

कान्तं रूपं यौवनं चारुशीलं
दानं दाक्षिण्यं वाक्च सामोपपन्ना ।
यं प्राप्यैते सद्गुणा भान्ति सर्वे
लोके कामिन्यः केन तस्य प्रसाध्याः ॥

(परिक्रम्य) अहो ! कुसुमपुरराजमार्गस्य परा श्रीः । इह

हि— सुसिक्तसंमृष्टोद्यावचकुसुमोपहारा अन्यगृहाणां वासगृहाय न्ते रथ्याः। नानाविधानां पण्यसमुदायानां क्रयविक्रयव्यापृतजनेन शोभन्तेऽन्तरापणमुखानि। ब्रह्मोदाहरणसंगीतधनुर्ज्याघोषै रन्योऽन्य मभिव्याहरन्तीव प्रासादपङ्क्तयः। कचिदुद्घाटितगवाक्षेषु प्रासादमेघेषु रथ्यावलोकनकुतूहला: शोभन्ते प्रमदाविद्युतः कैलासपर्वतान्तर्गता इवाप्सरसः। अपि च, प्रवरहयगजरथगता इतस्ततः परिचलन्तः शोभन्ते महामात्रमुख्याः। तरुणजननयनमनोहरणसमर्था श्चारुलीलाः स्थानविन्यस्तभूषणाः सुरनगरवरयुवतिश्रिय मपहसन्त्यः परिचरन्ति प्रेष्ययुवतयः। सर्वजननयनभ्रमरै रापीयमानमुखकमलशोभा रथ्यानुग्रहार्थमिव पादप्रचारलीलामनुभवन्ति गणिकादारिकाः। किं बहुना—

सर्वै वीतभयैः प्रहृष्टवदनै र्नित्योत्सवव्यापृतैः
श्रीमद्रत्नविभूषणाङ्गरचनैः स्रग्गन्धवस्त्रोज्वलैः।
क्रीडासौख्यपरायणैर्विरचितप्रख्यातनानागुणै-
र्भूमिः पाटलिपुत्रचारुतिलका स्वर्गायते साम्प्रतम्॥

(परिक्रम्य) अये! इयं खलु चारणदास्या दुहिता अनङ्गदत्ता नाम सुरतपरिश्रमखेदालसा चतुरपदविन्यासा सर्वजननयनामृतायमानरूपा इत एवाभिवर्तते। अवश्यमनया प्रियजननिर्दयोपभुक्तया भवितव्यम्। कुतः—

दशनपदचित्रितोष्ठं निद्रालसलोललोचनं वदनम्॥
जघनञ्च सुरतविभ्रमविलुलितरशनागुणपरीतम्॥

भो अस्या दर्शनमेव च नः कार्यसिद्धिनिमित्तम्। अये मामनवेक्ष्यैव गता। अभिभाषिष्ये तावदेनाम्। हन्त! स्वयमेव प्रतिनिवृत्ता। (उपगम्य) वासु। किं नाभिवादयसि। किं ब्रवीषि "चिरेण विज्ञातास्मि भवन्त मभिवादयामि" इति। श्रूयतामियमाशीः—

प्रथमवयसं स्वतन्त्रं दातारं चारुरूपमर्थाढ्यम् ।
भद्रे लभस्व भद्रं कुशलं कान्तं रतिपरं च ॥

वासु सर्वं तावत् तिष्ठतु ।

विधेयो मन्मथस्तस्य सफलं तस्य जीवितम् ।
वेशलक्ष्म्या त्वया सार्धं यस्येयं रजनी गता ॥

किं ब्रवीषि, "महामात्रपुत्रस्य नागदत्तस्योदवसितादागच्छामि" इति । भद्रे भूतपूर्वविभवः खल्वेषः । व्यक्तं मातु रप्रिय मुपपादितम् । कथं व्रीळावनतवदनयाऽनया हसितम् । हन्त ! सफलो नः प्रतर्कः । मामैवम् । कुतः—

मातुर्लोभ मपास्य यद्रतिसुखेष्वासक्तचित्ता सती
त्यक्त्वा वैशिकशासनं बहुफलं वेश्याङ्गनादुस्त्यजम् ।
गत्वा कान्तनिवेशनं बहुरसं प्राप्तासि कामोत्सवं
तेनायं गणिकाजन स्तव गुणैर्निक्षिप्तपादः कृतः ॥

अहो स्थाने खलु ते व्रीळा । किं शपथेन । स्वगृह मागत्यानुनेष्यामि ते मातरम् । त्वया तु वेश्योपचारविरुद्धं कृतम् । गच्छतु भवती । किं ब्रवीषि — "अभिवादयामि" इति । सुभगे श्रूयतामियमाशीः—

स्वगुणाः सद्गुणाः सर्वे न स्तोतव्याः स्थिता स्त्वयि ।
लोकलोचनकान्तं ते स्थिरीभवतु यौवनम् ॥

गतैषा । वयमपि गच्छामः । (परिक्रम्य)

अये एषा खलु विष्णुदत्ताया दुहिता माधवसेना नाम अनपेक्षितपरिजनानुसरणा व्याघ्रानुसारवित्रस्तमृगपोतिकेव त्वरिततरपदविन्यासा इत एवाभिवर्तते । व्यक्तमिदानीं जननीलोभदोषादनिष्टजनसंभोगपरिक्लिष्टयानया भवितव्यम् । तथा हि—

न ग्लानं वदनं न केशरचना प्रभ्रष्टपुष्पद्युतिः ।
दन्ताक्रान्तनिपीतकोमलरुचिर्नैवाधरोष्ठः कृतः ।
गाढालिङ्गनवर्जितौ स्तनतटावक्लिष्टपूर्णश्रियौ
श्रोण्यां रागरतिप्रबन्धशिथिला न व्याकुला मेखला ॥

अये अनिष्टजनसंभोगजनितसन्त्रासा मामनवेक्ष्यैवातिक्रान्ता । भवतु । एनामनुसृ्त्य निर्वेदकारणं ज्ञास्यामहे । हन्त ! स्वयमेव प्रतिनिवृत्ता । किं ब्रवीषि— "न मया भावोऽलक्ष्यत" इति । वासु नास्ति दोषः । परिक्लिष्टतया व्याकुलितचित्तानां बुद्धयो हि ससंभ्रमा भवन्ति । किं ब्रवीषि— "अभिवादयामि" इति । प्रतिगृह्यतामय माशीर्वादः —

आढ्यास्ते दयितास्सन्तु विप्रियास्सन्तु निर्द्धनाः ।
मातुर्लोभात्कदाचित्स्यान्नाप्रियैरपि सङ्गमः ॥

वासु कुत आगम्यते ?

किं ब्रवीषि— "धनदत्तसार्थवाहपुत्रस्य समुद्रदत्तस्योदवसितादागच्छामि" इति । अहो ! प्राप्तं कृतम् । अद्यतनकालवैश्रवणः खल्वेषः । किं दीर्घोष्णश्वसितविकम्पिताधरकिसलयं भ्रुकुटीविजिह्मितनयनं व्यावर्तितमेवानया वदनकमलम् । हन्त ! अथावितथप्रतर्काः स्मः । कुतः —

कृच्छ्रादत्तोष्ठबिंबं विरलमृदुकथं हासलीलावियुक्तं
जृंभोष्णश्वासमिश्रं परिशिथिलभुजालिङ्गनं वीतरागम् ।
दुःखादाश्रित्यशय्यां कृतकरतिविधौ चेष्टितं भावहीनं
व्यक्तं बालेऽकृथास्त्वं निशि दिवसकस्योदयं चिन्तयन्ती ॥

वासु अलमलं विषादेन । रूपावरोऽपि धनवान् गम्येष्वभिहित एव । श्रूयताम् —

सर्वथा रागमुत्पाद्य विप्रियस्य प्रियस्य वा ।
अर्थस्यैवार्जनं कार्यमिति शास्त्रविनिश्चयः ॥

किं ब्रवीषि—"भावस्यापि खलु मे जनन्याः समोनिश्चयः" इति । भवति मामैवम् । अस्त्येतत्कारणम् । गच्छतु भवती । त्वद्गृहमेवागत्य शास्त्रं तत्वतस्त्वा ग्राहयिष्यामि । अहो ! उपदेशदोषादनभिवाद्यैवगता । अहो ! तपस्विन्या उद्वेगः ; वयमपि साधयामस्तावत् । (परिक्रम्य)

अये एषा खलु विलासकौण्डिनी नाम परिव्राजिका सललितमृदुपदविन्यासा नयनामृतायमानरूपा इत एवाभिवर्तते । अस्याः पटवासगन्धोन्मत्ता भ्रमन्तो मधुकरगणाश्चूतशिखराण्यपि त्यक्त्वा परिव्रजन्ति खल्वेनाम् । अभिभाषिष्ये तावदेनाम् । यतो नयनश्रवणकुतूहलमपनेष्यामि । भगवति वैशिकाचलोऽहमभिवादये । किं ब्रवीषि—"न वैशिकाचलेन प्रयोजनं, भवेद्वैशेषिकाचलेन" इति । अस्त्येतत्कारणम् । कुतः—

दृष्टिस्तेऽतिविशालचारुरुचिरा नैकत्र सन्तिष्ठते ।
ग्लान्या कान्ततरं रतिश्रमयुतं शूनाधरोष्ठं मुखम् ॥
आचष्टे सुरतोत्सवप्रकरणं खेदालसा ते गतिः
व्यक्तं ते कथितं प्रियेण सुभगे रत्यर्थवैशेषिकम् ॥

किं ब्रवीषि—"अहो दासेनात्मसदृशमभिहितम्" इति ।

धन्या भवन्ति सुभगे दासास्ते चरणकमलयुगलस्य ।
अस्मद्विधस्य वरतनु कुतोऽस्ति तत्क्षीणपुण्यस्य ॥

किं ब्रवीषि—"षट्पदार्थबहिष्कृतैः सह सम्भाषणमस्माकं गुरुभिः प्रतिषिद्धम्" इति । भगवति युक्तमेवैतत् । कुतः—

द्रव्यं ते तनु रायताक्षि दयिता रूपादयस्ते गुणा
सामान्यं तव यौवनं युवजनः संस्तौति कर्माणि ते ।
त्वय्यार्ये समवायमिच्छति जनो यस्माद्विशेषोऽस्ति ते
योगस्ते तरुणैर्मनोभिलषितैर्मोक्षोऽप्यनिष्टाज्जनात् ॥

अये प्रहास एव नः प्रतिवचनम् । हन्त! सफलो नः प्रतर्कः । किं ब्रवीषि—"सांख्यमस्माभिर्ज्ञायते- अलेपको निर्गुणः क्षेत्रज्ञः पुरुषः" इति । हन्त! निरुत्तराः स्मः । अस्मत्कथाप्रसङ्गेन सोत्कण्ठेव भवती दृश्यते । तरुणजनसुरतविघ्नोऽप्यस्माभिः परिहर्तव्यः । साधयतु भवती । गतैषा । गच्छामस्तावत् । (परिक्रम्य)

अये किं नु खल्वेषा चारणदास्या माता रामसेना नाम वयःप्रकर्षेऽपि वर्तमाना विलासविप्रेक्षितगतिहसितैर्युवतिजनलीलां विडम्बयन्ती इतएवाभिवर्तते । अहो! विस्मयनीया खल्वेषा—

भुक्त्वा भोगानीप्सितान् कामिदत्तान्
कृत्वा सक्तान् स्वैर्गुणैः पीतसारान्
भूत्वा यूनां वैरसंघर्षयोनि-
र्नूनं दोग्धुं याति कान्तं सुतायाः ॥

हन्त! कामिजनमृत्युभूताया अस्या आदेहपातलीलामनुभवामस्तावत् । नमोऽस्त्वस्यै कामुकजनमहाशनये । बाले रामसेने दुहितृसङ्क्रान्तयौवनसौभाग्ये कतरस्य कामिनः कुलोत्सादनार्थमभिप्रस्थिता भवती । भोः तद्दर्शने शपथ एव नः प्रतिवचनम् । किं ब्रवीषि— "त्वच्छीलमेव त्वामाक्रोशयति" इति । अलमत्र बहुभाषित्वेन । त्वद्गमनमेव तावदुच्यताम् । किं ब्रवीषि— "दुहिता मे चारणदासी व्यतीतेऽहनि गता धनिकोदवसितम् । एनां सङ्गीतकव्यपदेशेनाकर्षितुमभिप्रस्थितास्मि" इति । अहो नु खलु चारणदास्याः प्रमादः । कुतः— कामुकजनसर्वस्वहरणकुशलाया निष्पीतसा

रपरित्यागसामर्थ्ययुक्तायास्तथापि नाम दुहिता भूत्वा शास्त्रोपदेशग्रहणेन शोच्या खलु सा तपस्विनी । कुतः—

लब्ध्वा गम्यं प्राप्य चार्थं यथावत्
ज्ञात्वा सम्यङ् निर्धनत्वं च तस्य ।
रागात्सक्तं विप्रमोक्तुं न वेत्ति
मिथ्या तस्याः शास्त्रतत्त्वोपदेशः ॥

किं ब्रवीषि—"सङ्गीतकव्यपदेशेन तां गृहमानयिष्यामि, त्वयापि प्रत्यागतेन तत्रागम्य शास्त्रतत्त्वश्रुतिं ग्राहयितव्या" इति । एवमस्तु । किन्तु त्वरानुष्ठेयं मित्रकार्यमस्ति । तत्समानीय भवत्याः कार्यमपि साधयिष्यामि । गच्छतु भवती । साधयामस्तावत् ।

अहो ! अविश्वसनीयानि खलु गणिकाजनस्य हृदयानि । कुतः—

स्निग्धैः प्रश्लिष्टैः क्रीडनैर्लालयित्वा
हृत्वा सर्वस्वं निर्घृणाः कामुकानाम् ।
लुब्धा वेश्या स्तानन्यसंरञ्जनार्थं
देहान् वैराग्याद्देहिवत्सन्त्यजन्ति ॥

अहो ! गणिकामातरो नाम कामुकजनस्य निष्प्रतीकारा ईतयः । सर्वथा स्वस्त्यस्तु कामुकेभ्यः । विनाशोऽस्तु कामुकजनसर्वस्वहरणकुशलाभ्यो गणिकाजनमातृभ्यो गणिकामोधास्त्रसर्गनिपुणाभ्यः । (परिक्रम्य)

अहो ! राजमार्गस्य कलिः सुकुमारिका नाम तृतीया प्रकृतिरित एवाभिवर्तते । अहो अमङ्गलदर्शनैषा, भवतु । अनभिभाष्यैनां वस्त्रमन्तरीकृत्यातिक्रमिष्यमस्तावत् । (तथा कुर्वन्) अये अनुधावत्येव माम् । केदानीं मे गतिः । अहो बलवान् कृतान्तः—यस्मात्प्रियमाभिभाष्यैनां व्याघ्रमुखादिवात्मानं मोचयिष्यामि । किं

ब्रवीषि— "अभिवादयामि" इति । वासु अविधवा बहुपुत्रा भव अथ च—

भ्रूक्षेपाक्षिविचारणोष्ठचलनैर्बाह्वोश्च विक्षेपणै
र्गत्या चारुकया विलासहसितैः स्त्रीविभ्रमा निर्जिताः ।
विस्पष्टाकुललोललम्बिरशना श्रोणी विशालायता
कस्यायासि रतैरतृप्तहृदया गेहाद्विशालेक्षणे ॥

किं ब्रवीषि— "राजस्यालस्य रामसेनस्य गृहादागच्छामि" इति । अहो ! सफलं जीवितं तस्य । सुभगे किमिदानीं चक्रवाकमिथुनस्येव वियोगः संवृत्तः । किं ब्रवीषि— "राजावस्थानं गच्छन्त्या गणिकापरिचारिकया रतिलतिकया चतुरमधुरहसितरतिचेष्टया सस्नेहललितकटाक्षविक्षेपाम्बुभिरभिषिच्यमानहृदयः समुद्गतरोमाञ्चानिवेद्यमानमदनानुरागः स तस्यास्तं मदनानुरागं शिरःप्रणामेन प्रतिगृहीतवान् । ततस्तत्प्रत्यक्षव्यलीकमसहमानया मया प्रत्यादिष्टस्सन् पादयोर्मे पतितः । तथापि च मया इर्ष्याभिभूतहृदयया नैवास्य प्रसादः कृतः । ततो मा मसौ बलात्कारेण गृहमानीय पर्यङ्कतलमारोप्य मया संहासितः । स पुनर्मां मदनाक्रान्तो रजन्यां मदनवेगखेदसुप्तां परित्यज्य तस्या एव गृहं गत्वाद्य कतिपयान्यहानि नैव गृहमागच्छतीति पुनरस्याहमनुनयमगृहीत्वा पश्चात्तापेन दह्यमाना भावसमीपमुपागता यदृच्छया भावं समासादितास्मि । तद्भावः प्राणसमेन मे सन्धानं कर्तुमर्हति" इति । वासु अहो रामसेनस्य प्रमादः । कुतः—

व्याक्षेपं कुरुतस्तनौ न सुरते गाढोपगूढस्य ते
रागघ्नस्तव मासि मासि सुभगे नैवार्तवस्यागमः
रूपश्रीनवयौवनोदयरिपुर्गर्भोऽपि नैवास्ति ते
त्वमेवं सगुणां विहास्यति सचेद्रत्युत्सवं त्यक्ष्यति ॥

भवत्विदानीम् । मानिनि तस्यैव स्वोद्वासिते मां प्रतिपालय । अस्ति तावन्मम मित्रकार्यं किञ्चित्त्वरानुष्ठेयम् । तत्समानीय तं भगिनीसौभाग्यगर्वितं सुकुमारहृदयानां त्वद्विधानां युवतीनां भावबहिष्कृतं गृहमागत्य चरणयोस्ते पातयिष्यामि । गच्छतु भवती । गतैषा । गच्छाम्यहम् । अहो ! कृच्छ्रेण खल्वस्माभिः प्रकृतिजनादात्मा मोचितः । (परिक्रम्य)

अये को नु खल्वयमागम्य मामभिवादयति । स्वस्ति भवते । चिरेणेदानीं मया संलक्षितोऽसि । पार्थकसार्थवाहपुत्रो धनमित्रो ननु भवान् । अथ भृत्यार्थिसंबन्धिसुहृज्जनदारिद्र्यतमोपहस्य युवतिजनहृदयकुमुदविबोधनकरस्य कुसुमपुरगगनपूर्णचन्द्रस्य कथमयं ते व्यसनोपरागः संवृत्तः ? किमतिलाभकांक्षया कुडुम्बसर्वस्वेन संगृहीतभाण्डो देशान्तरमभिगच्छन्नन्तरा चोरैरभ्यासादितो भवान् ? आहोस्वित् राज्ञोऽपथ्यमाचरत स्ते राज्ञापहृतं सर्वस्वम् ? अथवा एकाक्षपातमात्रेण धनदस्यापि विभवहरणसमर्थेन द्यूतेन क्षपितो भवान् ? किं बहुना— —

संरूढदीर्घनखलोममलाचिताङ्गो
ध्यानाभिभूतपरिपाण्डुरशुष्कवक्त्रः ।
अश्लक्ष्णजीर्णमलकीर्णविशीर्णवस्त्रो
नाभासि दिव्यमुनिशापहतो यथैव ॥

किं ब्रवीषि— "यथा रामसेनाया दुहितरि रतिसेनायां परमो मम मदनानुराग संवृत्तः । तस्याश्च मयि तथा । सर्वमेतद्विदितं भावस्य । अतो मातुर्लोभविकारं ज्ञात्वापि सा मां न त्यक्ष्यतीति सुहृज्जनेन निवार्यमाणेनापि मया कुटुम्बसर्वस्वं तस्यै युगपदेवोपनीतम् । ततस्तद्गृहीत्वा कतिपयेष्वेवाहस्सु गतेषु स्नानव्यपदेशेन स्ना-

नीयशाटिकां परिधाप्य मा मशोकवनिकादीर्घिकां प्रवेश्य द्वारे चापिहिते अशोकवनिकारक्षिभिः विदितपरमार्थैः पुरुषैश्छिद्रद्वारेण निष्क्रामितोऽहम् । ततोस्मिन्नेव नगरे ऊर्जितमुषित्वा कथमिदानीं बहून्यहानि वनिवासं पश्यामीति अरण्यमभिप्रस्थितेन मया यदृच्छया भाव एवासादितः । सुगुह्यमप्येतद्भावस्य निवेदितम् । तदिदानीं भावेनानुज्ञातःस्वात्मनिःश्रेयसं चिन्तयिष्यामि" इति । अहो ! लोभाभिनिवेशो वेशस्य । अहो ! कुटिलस्वभावता च । एहि परिष्वजामहे तावद् भवन्तम् । दिष्ट्या जीवन्तं त्वां पश्यामि । कुतः—

शान्तिं याति शनैर्महौषधिबलादाशीविषाणां विषं
शक्यो मोचयितुं मदोत्कटकटादात्मागजेन्द्राद्वने ।
ग्राहस्यापि मुखान्महार्णवजले मोक्षः कदाचिद्भवेत्
वेशस्त्रीबडबामुखानलगतो नैवोत्थितो दृश्यते ॥

अथ भद्रमुख भवतो निर्वेदस्य कारणं रतिसेना, आहोस्विदस्या जननी ? किं ब्रवीषि—"किमित्यनृतमभिधास्यामि । रतिसेना मां प्रति सस्नेहैव । मातृदोषेणैवेदं संवृत्तम् । यदि तावद्भावः स्वल्पमपि तस्या मातुरविदितमेव मे समागमं प्रति यत्नं कुर्यात ततो मे प्राणाः प्रत्यानीता भवेयुः" इति । जाने तस्यास्त्वय्यनुरागमन्यस्मादपि जनान्मया नाम श्रुतम् । हा रोदित्ययम् । अलमलं विषादेन । ममेदानीं किञ्चित्त्वरानुष्ठेयं मित्रकार्यं मस्ति । तत्संपाद्य पुनरागम्य तवापि कार्यं साधयामि । गच्छतु भवान् । अहो ! निपुणता वेश्याङ्गनानाम् । कुतः ।

यथा नरेन्द्राः कुटिलस्वभावाः स्वं दुष्कृतं मन्त्रिषु पातयन्ति ।
तथैव वेश्याः शठधूर्तभावाः स्वं दुष्कृतं मातृषु पातयन्ति ॥

अहो गत एव तपस्वी खलजनोपाध्यायः । वयमपि साधयामस्तावत् । (परिक्रम्य)

अये वसन्तवनकोकिलानुसारिणा स्निग्धमधुरेण स्वरेण कया नु खल्वस्मन्नामधेयाभिव्यक्तिः क्रियते । (विलोक्य)

अये प्रियङ्गुसेना ! अयि प्रियङ्गुसेने अयमहमागच्छामि । किं ब्रवीषि—"अभिवादयामि" इति । वासु प्रतिगृह्यता मियमाशीः—

रमणं निवारयन्ती कोमलकरचरणताडनैः शयने ।
........सविमृदित सुविपुलजघना सुखमुपेहि ॥

वासु अतिपरिश्रान्तजघनाप्यायनकरस्य नानागन्धाधिवासितस्य सुरभिगन्धिनो गन्धतैलस्यात्माङ्गस्पर्शप्रदानेन किमनुग्रहः क्रियते ? भद्रमुखि अवतारितघण्टाग्रैवेयककक्षाया राजौपवाह्यकरेणोरिवावमुक्तालङ्कारायां निर्व्याजमनोहररूपायाश्चारुशोभं ते वपुर्यो न पश्यति स खलु वञ्चितः स्यात् । कुतः—

मुक्तालङ्कारशोभां नखरपदचितां गन्धतैलाङ्गरागा-
मीषत्ताम्रान्तनेत्रां प्रहसितवदनां यौवनोष्ण्यस्तनाढ्याम् ।
सुश्लक्ष्णार्द्रोरुवस्त्रां व्यपगतरशनां व्यायतश्रोणिबिंबां
दृष्ट्वा त्वां चारुरूपां प्रविचलितधृतिर्मन्मथोऽप्यातुरः स्यात् ॥

किं ब्रवीषि—"प्रियवचनं भावस्य" इति ।

भोः किमयं सेवावादः । अलं व्रीलामुत्पाद्य । आह्वानप्रयोजनं तावदुच्यताम् । किं ब्रवीषि—"श्रूयताम्" इति । वासु अवहितोऽस्मि । किं ब्रवीषि—"भगवतोऽप्रतिहतशासनस्य कुसुमपुरपुरन्दरस्य भवने पुरन्दरविजयं नाम सङ्गीतकं यथारसाभिनयमभिनेतव्यमिति देवदत्तया सह मे पणितः संवृत्तः । अत्र ममाभ्युदयस्य भावः कारणम्" इति । मामैवम् । सकलशशाङ्कविमलाय रजन्यां नास्ति दीपिकायोजनम् । अपि च बलवतो नास्ति सहाय-

सम्पत्प्रयोजनम् । भवत्येवात्र कारणम् । अस्मिन्नेवार्थे त्वदर्पितमदनानुरागहृदयेन रामसेनेनाभ्यर्थितोऽस्मि । कथं सभ्रूविलासविक्षेपमीषत्कुञ्चितनयनकपोलनिवेश्यमानान्तर्गतप्रहर्षं प्रचलिताधरकिसलयं मुखकमलं परिवर्त्य परिजनमवलोकयन्त्यानया हसितं हन्त प्राप्तं सेवाफलं रामसेनेन । अहो देवदत्ताया अकुशलता । या त्वया सह संघर्षं कुरुते । यस्यास्तावत्प्रथमं रूपश्रीनवयौवनद्युतिकान्त्यादीनां गुणानां सम्पत्, चतुर्विधाभिनयसिद्धिः, द्वात्रिंशद्विधो हस्तप्रचारः, अष्टादशविधं निरीक्षणं, षट् स्थानानि, गति द्वयं (त्रयं), अष्टौ रसाः, त्रयो गीतवादित्रादिलया इत्येवमादीनि नृत्तांगानि त्वदाश्रयेणालंकृतानि । अथवा अनेनापि वेषेण देवासुरमहर्षिमनोनयनहरणसमर्थानामप्सरोगणानामपि लंघनसमर्थेति त्वां पश्यामि । अपि च—

**प्रतिनर्तयसे नित्यं जननयनमनांसि चेष्टितैर्ललितैः ।**
**किं नर्तनेन सुभगे पर्याप्ता चारुलीलैव ॥**

अये व्रीडिता । हन्त अनेनैव व्रीडालङ्कारेण विसर्जिताः स्मः । गच्छामस्तावत् । (परिक्रम्य)

अये किन्नु खल्वेषा नारायणदत्तायाश्चेटिका कनकलता नाम चूर्णामोदितकर्कशस्तनयुगळं विविधकुसुमालंकृतकेशहस्ता किमपि खलु प्रहृष्टवदना मदविलासस्खलितपदविन्यासा इत एवाभिवर्तते । अभिभाषिष्ये तावदेनाम् । कथमन्तिकमुपेत्य मामभिवादयति । वासु किं ब्रवीषि? "अभिवादयामि" इति । वासु प्रियस्य दयिता भव । भवति चरणकमलविन्यासेन किमयं मार्गानुग्रहः क्रियते । किं ब्रवीषि? "प्रियवादी खलु भावः" इति । भद्रे नैष संस्तवः । किं ब्रवीषि? "अनुगृहीतास्मि" इति । सर्वं तावत्तिष्ठतु । किमिदानीं चक्रवाकमिथुनस्येव वियोगस्संवृत्तः । किं ब्रवीषि? "ईर्ष्याभिभूतहृदयायां परित्यक्तस्नानशयनभोजनालङ्कारायामशोकवनिकायामशोकवा-

लवृक्षसंश्रिते शिलातल उपविष्टायामीषत्पर्याप्त चन्द्रमण्डलदर्शनेनाभि- भृतमधुकररवेण वसन्तकुसुमगन्धामोदकर्कशेन दक्षिणपवनेन च परिव- र्धितसन्तापायां सखीजनमधुरवचनैराश्वास्यमानायामस्मदज्जुकायामशो- कवनिकाभ्याशे कोऽपि खलु पुरुषस्संदिष्ट इव मदनेनाव्यक्तकाकलीं रचनामूर्छनां वीणां कृत्वा इमे वक्त्रापरवक्त्रे गायन्नतिक्रान्तः ।

निष्फलं यौवनं तस्य रूपश्च विभवश्च यः ।
यो जनः प्रियसंसक्तो न क्रीडति वसन्तके ॥

अपि च—

शशिनमभिसमीक्ष्य निर्मलं
परभृतरम्यरवं निशम्य वा ।
अनुनयति न यः प्रियं जनं
विफलतरं भुवि तस्य जीवितम् ॥ इति ।

ततस्तेन गीतकेन शिथिलीकृतमानपरिग्रहास्मदज्जुका आयु- ष्मदागमनमप्यप्रतिपालयन्ती मामेवाहूय पादचारेणैवास्मद्भर्तृदारकगृ- हमभिप्रस्थिता । तथैवास्मद्भर्तृदारकोऽपि वसन्ताक्रान्तशिथिलीकृत धृतिर्भूत्वा सह केनाप्यस्मदज्जुकामनुनेतुमागच्छन वीणाचार्यस्य वि- श्वावसुदत्तस्योदवसितद्वार्यस्मदज्जुकां समासादितवान् । ततस्तौ किञ्चिद- प्रतिपद्यमानौ दृष्ट्वा यदृच्छया निर्गतेन विश्वावसुदत्तेनात्मन उदवसित- मेव प्रवेशितौ । ततः प्रभातेऽस्मदज्जुकयाहमभिहितः "भाव वैशि- काचलं गृहीत्वागच्छ" इति । तदागम्यतां" इति । अहो श्रुतिसुखं निवेदितं भवत्या । किमन्यां ते प्रीतिमुत्पादयिष्यामि । प्रतिगृह्य- तामियमाशीः—

तव भवतु यौवनश्रीः प्रियस्य सततं भव प्रियतमा त्वम् ।
अनवरतमुचितमभिमतमुपभोगसुखं च ते भवतु ॥

गच्छाग्रतः (परिक्रम्य) किमाह कनकलता "एतद्गृहान प्रविशाम"

इति । बाढं प्रविशामस्तावत् । (प्रविश्य) अलमलं संभ्रमेण । आस्तामास्तां कामियुगळं—

अत्मगुणेन वसन्तो यथाद्य युवयोः समागममकार्षीत् ।
ऋतवस्तथैव सर्वे कुर्वन्तु समागमं कलहे ॥

आत्मगुणगर्वितेन वसन्तेनाहमपि वञ्चितः । यतो युवयोः समागमबहिष्कृतः । किमिदानीमभिधास्यामि । अथवा नास्त्यत्रापराधो वसन्तस्य । कुतः—

उद्यानानि निशाश्च चन्द्रसहिता वीणाश्च रक्तस्वरा
गोष्ठी दूतिजनो विचित्रवचनो नानाविधाश्चर्तवः ।
नैतत् कामिजनस्य संगमविधौ संजायते कारणं
ह्यन्योऽन्यस्य गुणोद्भवैरकृतकै रागोच्चयः कारणम् ॥

तस्मादन्यजनदुर्लभेन परस्परगुणातिशयनिचितेनात्मगुणोपनीतेन मदनतन्त्रसारेण कुसुमपुरप्रकाशेन युवयोरेव रागेण वञ्चिताः स्मः। किं ब्रूथ "आवयोरागोऽपि भावस्यैव प्रयत्नजनितम् । तेन भाव एव समागमकारणम् । कृत्स्नमिदानीं पाटलिपुत्रं यस्य वचनलीलामनुभवति स कथं कामिजनवचनविशेषैरतिशयितो भवेत्" इति । कथाप्रसंगेन सुरततृषितस्य कामियुगळस्य रतिव्याक्षेपः परिहर्तव्यः। तदनुज्ञातो गन्तुमिच्छामि ।

(भरतवाक्यम्)

व्याकोचांभोजकान्तं मदमृदुकथितं चारुविस्तीर्णशोभं
जातस्त्वं प्रीतियुक्तः प्रिययुवतिमुखं वीक्षमाणो यथाद्य ।
एवं सस्यर्धियुक्तां जलनिधिरशनां मेरुविन्ध्यस्तनाढ्यां
प्रीतिं प्राप्नोतु सर्वां क्षितिमधिकगुणां पालयन्नो नरेन्द्रः ॥

(इति निष्क्रान्तो विटः)

इति श्रीमद्वररुचिमुनिकृतिरुभयाभिसारिका नाम भाणः समाप्तः ।

श्रीः

महाकवि

श्यामिलकविरचितं

# पादताडितकम्.

---:o:---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सू— देहत्यागेन शंभोर्नयनहुतवहे मानितो येन कोपः
सेन्द्रा यस्यानुशिष्टिं स्रजमिव विबुधा धारयन्त्युत्तमांगैः ।
पायात्कामः स युष्मान् प्रविततवनितालोचनापाङ्गशार्ङ्गो
बाणा यस्येन्द्रियार्था मुनिजनमनसां सादका भेदकाश्च ॥

अपि च,

सभ्रूक्षेपं सहासं स्तननिहितकरामीक्षमाणेन देवीं
सन्त्रासाक्षिप्तवाग्भिः सह गणपतिभिर्नन्दिना वन्दितेन ।
पायाद्वः पुष्पकेतुर्वृषपतिककुदापाश्रयन्यस्तदोष्णा
यस्य क्रुद्धेन वाह्यं करणमपहृतं शंभुना न प्रभावः ॥ २ ॥

एवमार्यमिश्रान् शिरसा प्रणिपत्य विज्ञापयामि । यद्वयमार्यश्यामिलकस्य कृतिं पादताडितकं नाम भाणं प्रयोक्तुं व्यवसिताः । तत्तस्य कवेर्मतिपरिश्रममवधानेनानुगृहीतुमिच्छामः । कुतः—

इदमिह पदं माभूदेवं भवत्विदमन्यथा-
कृतमिदमयं ग्रन्थेनार्थो महानुपपादितः ।
इति मनसि यः काव्यारंभे कवेर्भवति श्रमः
स नयनजलो रोमोद्भेदः सतां तमपोहति ॥ ३ ॥

डा

निर्गम्यतां बकविलालसमप्रचारै-

रार्यैश्च राजसचिवैः शमवृत्तिभिश्च ।

तिष्ठन्तु डिण्डिकविनर्मकलाविदग्धा

निर्मक्षिकं मधु पिपासति धूर्तगोष्ठी ॥ ४ ॥

कुतः— न प्राप्नुवन्ति यतयो रुदितेन मोक्षं

स्वर्गायतिं न परिहासकथा रुणद्धि ।

तस्मात्प्रतीतमनसा हसितव्यमेव

वृत्तिं बुधेन खलु कौरुकुचीं विहाय ॥ ५ ॥

को नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । (कर्णं दत्वा) हन्त! विज्ञातम् । एष हि स विटमण्डपः । (प्रविश्य) धूर्तचाक्रिकः खलतिश्यामिलको घण्टामाहत्य घोषयति । य एषः—

व्यतिकरसुखभेदः कामिनीकामुकानां

दिवससमयदूतो दुन्दुभीनां पुरोधाः ।

कलमुषसि खरत्वादस्य कण्ठा (घंटा) रवाणां

बलवदभिनदन्तो गर्दभा नानुयान्ति ॥ ६ ॥

किन्नु तावदनेन घुष्यते? (कर्णं दत्वा) (नेपथ्ये)

जयति मदनस्य केतुः कान्तं प्रत्युद्यतो विलासिन्याः ।

शिरसा प्रार्थयितव्यः सालक्तकनूपुरः पादः ॥ ७ ॥

(निष्क्रान्तः)

स्थापना ।

(ततः प्रविशति विटः)

वि— मा तावद्भोः किमत्र घोषयितव्यम्? यदेवं—

प्रणयकलहोद्यतेन स्रस्तांशुकदर्शितोरुमूलेन ।

जितमेव मदकलाया नूपुरमुखरेण पादेन ॥ ८ ॥

अये केनैतद्धसितम्? (विलोक्य) दद्रुणमाधवोऽयत्रैव । अयो! दद्रुणमाधव किमत्र हास्यस्थानम्? किं ब्रवीषि— "प्रत्यक्षं हि मे तत् यदतीतेऽहनि तत्रभवया सुराष्ट्राणां वारमुख्यया समदनया मदनसेनिकया तत्रभवान् स्तौण्डिकोकिर्विष्णुनागश्चरणकमलेन शिरस्यनुगृहीतः" इति । सुष्ठु खल्विदमुच्यते—

"एति जीवन्तमानन्दो नरं वर्षशतैरपि ।" इति । विष्णुनागोऽपि नामैवं सर्वकामिजनसाधारणं चरणताडनसंज्ञकं शिरस्यभिषेकं प्राप्तवान् । किं ब्रवीषि— "कुतोऽस्य तानि भागधेयानि? यः स ईदृशानां प्रणयकलहोत्सवानां पात्रं भविष्यति । स हि तस्या वेशदेवतायास्तं संमानविशेषमवमानं मन्यमानः क्रोधपरिव्यक्तनयनरागः प्रस्फुरितभ्रुकुटीवक्रं ललाटं कृत्वा शिरो विनिधूर्य दशनैरोष्ठमभिदश्य पाणिना पाणिमभिहत्य दीर्घं निश्वस्योक्तवान् । 'हा धिक् पुंश्चलि अनात्मज्ञे यथा त्वया ममास्मिन्

प्रयतकरया माता यत्नात्प्रबद्धशिखण्डके
चरणविनते पित्राघ्राते शिशुर्गुणवानिति ।
स कुसुमलवैः शान्त्यंभोभिर्द्विजातिभिरुक्षिते
शिरसि चरणौ न्यस्तौ गर्वान्न गौरवमीक्षितम्' ॥ ९ ॥

एवमनेनोक्ता विरज्यमानसन्ध्यारागेव रजनी वर्णान्तरमुपगता । अतिप्रभातचन्द्रनिष्प्रभं वदनमुद्वहन्ती

व्यपगतमदरागा भ्रश्यमानोपचारा
किमिदमिति विषादात्स्विन्नसर्वाङ्गयष्टिः ।
भयविगलितशोभा वान्तपुष्पेण मूर्ध्ना
न पुनरिति वदन्ती पादयोस्तस्य लग्ना ॥ १० ॥

प्रणिपातावनता चानेन निर्धूयोक्ता 'चण्डि मास्प्राक्षीः, कर्दनेन

न मां ढौकितुमर्हसि' इति" इति । कष्टं भोः कोकिला खलु कौशिकमनुवर्तते । मदनसेनिकापि तं पुरुषवेतालं कदर्थमपवीर्यमनुवर्तेत इति मे विस्मयः । भवति च पुनर्महामात्रपुत्रो राज्ञः शासनाधिकृत इति न दानकामाः पेक्षन्ते (ते) । शब्दकामाः खल्वेता भवन्ति । कामे हि प्रयोजनमनेकविधमित्युपदिश्यते । किं ब्रवीषि— "लब्धं खलु शब्दकामया शब्दप्रधानार्जनाच्छब्दस्य व्यसनं" इति । सा हि तपस्विनी

तिर्यक्त्रपा वनतपक्ष्मपुटप्रवान्तै-
धौताधरस्तनमुखी नयनांबुपातैः ।
स्वांगेष्वलीयत नवैः सहसा स्तनद्भि-
रुद्वेजिता जलधरैरिव राजहंसी ॥ ११ ॥ इति ।

न च भोश्चित्रमिदं श्रोतव्यं श्रुतम् । न च खल्वस्माभिर्विदितार्थैरप्यतीतं पृष्टम् । ततस्ततः । किं ब्रवीषि— "ततः स मया निर्भर्त्स्योक्तः 'अये वैय्याकरणखसूचिन् सुमनसो मुसलेन मा क्षौत्सीः वल्लकीमुल्मुकेन मा वादीः वाक्क्षुरेण किसलयश्रीवां मा लौत्सीः मत्तकाशिनीं' इति । एवमुक्तो मामनादृत्य विटमहत्तरं भट्टिजीमूतगृहं गतः । ततः सा तपस्विनी करकिसलयपर्यस्तकपोलमाननं कृत्वा प्ररुदिता । तत उत्थाप्य मयोक्ता— 'सुन्दरि न वानरो वेष्टनमर्हति गर्दभो वा वरप्रवहणं वोढुम् । अलमलं रुदितेन । हास्यः खल्वेष तपस्वी । नैवं महान्तं शिरःसत्कारमर्हति ।

किं कामी न कचग्रहैर्यमबलाः क्लिश्यन्ति मत्ता बला-
द्यं बध्नन्ति न मेखलाभिरथवा न घ्नन्ति कर्णोत्पलैः।
पक्षे तस्य तु मन्मथः सुकृतिनस्तस्योत्सवो यौवनं
दासेनेव रहस्यपेतविनयाः क्रीडन्ति येनांगनाः' ॥ १२ ॥

एवमुक्त्वा स्मितपुरस्सरमपांगेन मे वचः प्रतिगृह्य सशिरः-पादमवकुण्ठ्य वाससा शयनतलमलंकृतवती । अहमपि कामिप्रत्यवरस्य दुश्चरितमनुचिन्तयन् प्रभातमिति राज्ञः प्राभातनान्दीस्वनैरुत्थापितः कृतकर्तव्यस्तदेव दुःस्वप्नदर्शनमिवापनेतुं ब्राह्मणपीठिकां गतः । तस्यां ब्राह्मणपीठिकायां पूर्वगतं कर्णिकेशं विष्णुनागमेवार्तरूपमात्मकर्माचक्षाणं 'असावहं भोः एवंकर्मा । तं मा वृषल्याः पादवधूतशिरस्कं त्रातुमर्हन्ति त्रैविद्यवृद्धाः' इत्युक्तवन्तमपश्यम् । एवमुक्ता ब्राह्मणाश्चलकपोलसूचितहासमन्योऽन्यमवलोक्य मुहूर्तमिव ध्यात्वोक्तवन्तः । 'भोः साधो अवलोकितान्यस्माभिर्मनुयमवसिष्ठगौतमभरद्वाजशंखलिखितापस्तम्बहारीतप्रचेतोदेवलवृद्धगार्ग्यप्रभृतीनां मनीषिणां धर्मशास्त्राणि । नैवंविधस्य महतः पातकस्य प्रायश्चित्तमवगच्छामः' इति । एवमुक्तो विषण्णतरवक्त्र उच्छ्रित्य हस्तावुपाक्रोशत । 'भो भोः चतुर्थो वर्ण इति न मामर्हथ भूमिदेवाः परित्यक्तुम् । कुतः —

आर्योऽस्मि शुद्धचरितोऽस्मि कुलोद्गतोऽस्मि
शब्दे च हेतुसमये च कृतश्रमोऽस्मि ।
राज्ञोऽस्मि शासनकरो न पृथग्जनोऽस्मि
त्रायध्वमार्तमगतिं शरणागतोऽस्मि ॥ १३ ॥

एवमुक्तायां तस्यां परिषदि —

कैश्चिद्वीरयमित्यरातिचलनैरन्योऽन्यमाघाट्टितं
स्यादुन्मत्त इति स्थितं स्मितमुखैः कैश्चिच्चिरं वीक्षितम् ।
कैश्चित्कामपिशाच इत्यपि तृणं दत्वान्तरे धिक्कृतं
कैश्चिद्दुष्कृतकारिणीति च पुनः सैवांगना शोचिता ॥ १४ ॥

एवमवस्थायाश्च संसदि तस्यां प्रतिपत्तिमूढेषु ब्राह्मणेषु प्रायश्चित्तविप्रलंभविह्वले क्रोशति विष्णुनागे तेषामेकतम आचार्यपुत्रः स्वयञ्चा-

चार्यो दण्डनीत्यान्वीक्षिक्योरन्यासु च विद्यास्वभिविनीतः कलास्वपि च सर्वासु परं कौशलमनुप्राप्तो वाग्मी चान्तेवासिगणपरिवृतः परिहासप्रकृतिः शाण्डिल्यो भवस्वामी नाम ब्राह्मणः सव्येतरं हस्तमुद्यम्य स्मितोदग्रया वाचा परिषदमामन्त्र्योक्तवान् 'अये भो विष्णुनाग न भेतव्यम् अलमलं विषादेन । अस्तीदं धर्मवचनं 'यथादेशजातिकुलतीर्थसमयधर्माश्चाम्नायैराविरुद्धाः प्रमाणं' इति । अतो विटजातिं सन्निपात्य विटमुख्येभ्यः प्रायश्चित्तं मृग्यताम् । ते हि त्वामस्मात्किल्बिषान्मोचयिष्यन्ति' इत्युक्ते साधुवादानुयात्रमूर्ध्वाङ्गुलिप्रनृत्तमवर्तत तस्यां परिषदि । तच्छ्रुत्वा विष्णुनागोऽप्यनुगृहीत इति प्रस्थितः । त्वञ्चापि विटसन्निपातकर्मणि नियुक्तः' इति बाढम् । किं ब्रवीषि— 'के पुनरिह भवतो विटसम्म (मि) ताः' इति ननु भवानेव तावदग्रे विटः । किं ब्रवीषि — 'कथमहमपि नाम विटशब्देनानुगृहीतः' इति । कः संशयः श्रूयतां—

दिवसमखिलं कृत्वा वादं सह व्यवहारिभि-
र्दिवसविगमे भुक्त्वा भोज्यं सुहृद्भवने क्वचित् ।
निशि च रमसे वेशस्त्रीभिः क्षिपस्यपि चायुधं
जलमपि च ते नास्त्यावासे तथापि च कत्थसे ॥ १५ ॥

तत्कथं त्वमविटः? किं ब्रवीषि — 'यद्येवमनुगृहीतः सन्निपातयिष्यसि विटान् विटलक्षणं तावच्छ्रोतुमिच्छामः' इति । तत्प्रथमः कल्पः । श्रूयतां—

स्वैः प्राणैरपि विद्विषः प्रणयिनामापत्सु यो रक्षिता
यस्यार्तौ भवति स्व एव शरणं खड्गद्वितीयो भुजः ।
संघर्षान्मदनातुरो मृगयते यं वारमुख्यो जनः
स ज्ञेयो विट इत्यपावृतभयो यो नित्यमेवार्थिषु ॥ १६ ॥

अपि च,

चरणकमलयुग्मैरर्चितं सुन्दरीणां
समकुटमिव तुष्ट्या यो बिभर्त्युत्तमाङ्गम् ।
स विट इति विटज्ञैः कीर्त्यते यस्य चार्थान्
सलिलमिव तृषार्ताः पाणियुग्मैर्हरन्ति !! १७ ॥

किं ब्रवीषि— 'उक्तं विटलक्षणं विटानिदानीमुपदेष्टुमर्हसि' इति । श्रूयतां — तत्रभवान् कामचारो भानुः लोमशो गुप्त अमात्यो विष्णुदासः शैव्य आर्यरक्षितो दाशेरको रुद्रवर्मा आवन्तिकः स्कन्दस्वामी हरिश्चन्द्रो भिषक् आभीरकः कुमारो मयूरदत्तो मार्दंगिकः स्थाणुर्गांधर्वसेनक उपायनिरिन्तकथः पार्वतीयः प्रथमोऽपरान्ताधिपतिरिन्द्रवर्मा आनन्दपुरतः कुमारो मखवर्मा सौराष्ट्रिको जयनन्दको मौद्गल्यो दयितविष्णुरित्येवमादयो यथासंभवं सन्निपात्याः । किं ब्रवीषि— "सर्वं तावत्तिष्ठतु । दयितविष्णुरपि भवतो विटसंमतः" इति । कः सन्देहः । किं ब्रवीषि— "एष योऽयं राज्ञो बलेष्वधिकृतः पारशवः कविः" इति । बाढमेवमेवैतत् । किं ब्रवीषि— "मा तावद्भोः—

यः संकुचत्युपहितप्रणयोऽपि राज्ञो
यो मङ्गलैः स्वपिति च प्रतिबुध्यते च ।
देवार्चनादपि च गुग्गुलुगन्धवासा
योऽसौ किणत्रयकठोरललाटजानुः ॥ १८ ॥

अपि च,

देवकुलाद्राजकुलं राजकुलाद्याति देवकुलमेव ।
इति यस्य यान्ति दिवसाः कुलद्वये संप्रसक्तस्य ॥ १९ ॥

कथमसावपि विटः" इति । आ एवमेतत् । अस्तीदमस्य विटसंवादप्रत्यनीकभूतम् । किन्तु

पूर्वावन्तिषु यस्य वेशकलहे हस्ताग्रशाखा हृता
सक्थ्नोः संयति यस्य पद्मनगरे द्विड्भिर्निखाताविषू ।
बाहू यस्य विभिद्य भूरधिगता यन्त्रेषुणा वैदिशे
यो वाजीकरणार्थमुज्झति वसून्यद्यापि वैद्यादिषु ॥ २० ॥

यस्माद्ददाति स वसूनि विलासिनीभ्यः
क्षीणेन्द्रियोऽपि रमते रतिसंकथाभिः ।
तस्माल्लिखामि धुरि तं विटपुङ्गवानां
रागो हि रंजयति वित्तवतां न शक्तिः ॥ २१ ॥

कथमसावविटः? किं ब्रवीषि– "एवञ्चेदग्रणीर्विटानां" इति । तस्मादेवायं धुरि लिखितः । गच्छतु भवान् । स्वस्ति भवते । साधयामस्तावत् । (परिक्रम्य)

एषोऽस्मि नगररथ्यामवतीर्णः । अहो तु खलु जम्बूद्वीपतिलकभूतस्य सर्वरणाविष्कृत (रत्नालंकृत) विभूतेः सार्वभौमनरेन्द्राधिष्ठितस्य सार्वभौमनगरस्य परा श्रीः । इह हि —

संगीतैर्वनिताविभूषणरवैः क्रीडाशकुन्तस्वनैः
स्वाध्यायध्वनिभिर्धनुस्स्वनयुतैः मृनासिशब्दैरपि ।
पात्रीणां गृहसारसप्रतिरुतैः कक्ष्यान्तरेषु स्वनैः
संजल्पानिव कुर्वते व्यतिकरात्प्रासादमालाः सिताः ॥ २२ ॥

अपि च,

गिरिभ्यो द्वीपेभ्यः सलिलनिधिकच्छादपि मरो-
र्नरेन्द्रैरायातैर्दिशि दिशि निविष्टैश्च शतशः ।
विचित्रामेकस्थामनवगतपूर्वामिव कथा-
मिह स्रष्टुः सृष्टेर्बहुविषयतां पश्यति जनः ॥ २३ ॥

शकयवनतुषारपारसीकैर्मगधकिरातकालिंगवंगकाशैः ।
नगरमतिमुदायुतं समन्तान्महिषकचोळकपाण्ड्यकेरळैश्च ॥ २४ ॥

(विलोक्य) अये को नु खल्वेषोऽवमुक्तकञ्चुकतया धवलशिबिकयेभ्यविधवालीलां विडंबयन्निव एवाभिवर्तते । (विमृश्य) भवतु विज्ञातं । एष हि स वेत्रदण्डकुण्डिकाभाण्डसूचितो वृषलचौक्षामात्यो विष्णुदासः । अनेन ह्यत्र महत्यपि प्राड्विवाककर्मणि नियुक्तेन ध्यानाभ्यासपरवत्तयोपेक्षाविहारिणेव भिक्षुणा नार्यर्थं राजकार्याणि क्रियन्ते । तथा हि—

करविचलितजानुः कैश्चिदर्द्धासनस्थैः
समवनतशिरोभिः कैश्चिदाकृष्टपादः ।
अधिकरणगतोऽपि क्रोशतां कार्यकाणां
विपाणिवृष इवैषो ध्याति निद्राश्च याति ॥ २५ ॥

तत्कामं विटजनप्रत्यनीकभूतमस्य दर्शनम् । तथापि धर्ममुपदिशन्नभिगम्य एव । उपसर्पाम्येनम् । एष खलु दूरादेव मामवलोक्य शिविकामवतार्यावतरति । अये भोः मर्षयतु भवान् । नार्हस्यस्मानुपचारयन्त्रणया जर्जीकर्तुम् । किं ब्रवीषि— "कश्च भवन्तमुपचरति ? आचारोऽयमस्माभिरनुवर्त्यते" इति । मातावृद्धाः एवमुपचरता युक्तं नाम भवतीमनङ्गसेनामिह प्रणयाभिमुखीं तथा विमुखयितुम् । किं ब्रवीषि— "किं मया न तस्याः प्रणयानुरूपः सम्परिग्रहः कृतः ? पश्यतु भवान् । सा हि मया—

स्वस्तीत्युक्त्वा वन्दनायां कृतायामासीनायां याचितं योगशास्त्रम् ।
नेत्रे चास्या वायुनेवेर्ष्यमाणे संप्रेक्ष्योक्ता पुलिसर्पि पिबेति ॥ २६ ॥

तत्कथं न संप्रतिगृहीता मया" इति । अहो कामिन्याः सलक्षि-

तसम्परिग्रहः कृतः एष मां प्रहस्य चौक्षोपायनेन बीजपूरकेण प्रसादयति । अये भो युष्मदन्तेवासिन एव वयमीदृशेषु प्रयोजनेषु नोत्कोट (च) नाभिर्वञ्चयितुं शक्याः । सर्वथाऽनुग्रय एवास्तु भवान् । साधयामस्तावत् । (परिक्रम्य)

एष भोः अनेकदेशस्थलजजलजसारफल्गुपण्यक्रयविक्रयोपस्थितस्त्रीपुरुषसंबाधान्तरापणां सार्वभौमस्य विपणिमनुप्राप्तः । अहो ! बतास्याः —

शकुनीनामिवावासे प्रचारेषु गवामिव ।
जनानां व्यवहारेषु सन्निपातो (ते) महाध्वनिः ॥ २७ ॥

तथा हि—

स्वरः सानुस्वारः परिपतति कर्म्मारविपणौ
भ्रमारूढं कांस्यं कुररविरुतानीव कुरुते ।
धृ (दु, धु) तं शंखे (के) शल्कं रसति तुरगश्वासपिशुनं
समन्ताच्चाप्नोति क्रयमपि जनो विक्रयमपि ॥ २८ ॥

अपि चेदानीं—

सुमनस इमा विक्रीयन्ते हसन्त्य इव श्रिया
चरति चषकः पानागारेष्वतः परिपीयते ।
करधृतःतृणैर्मांसक्रायैरपांगनिरीक्षिता
नगरविहगाः सूनामेते पतन्त्यसिमालिनीम् ॥ २९ ॥

अपि च,

अंसेनांसमभिघ्नतां विवदतां तत्तच्च संक्रीणतां
सस्यानामिव पंक्तयः प्रचलतां नृणाममीराशयः ।
द्यूतादाहृतमाषकाश्च कितवा वेशाय गच्छन्त्यमी
संप्राप्ताः परिचारकैः सकुसुमैः सापूपमांसासवैः ॥ ३० ॥

यावदहमपीदानीं महाजनसंमर्ददुर्गमं विपणिमार्गमुत्सृज्येमां पुष्पवीथिकामन्तरेण पानागाराण्यपसव्यमुपावर्तमानः पूर्णभद्रशृङ्गाटकमवतीर्य मकररथ्यया वेशमार्गमवगाहिष्ये । तत्कामममसंगृहीतमाषस्य वेशप्रवेशो निरायुधस्य संग्रामावतरणमित्युभयमपार्थकं केवलमयशसे चानर्थाय च । किन्तु सुहृन्निदेशोऽयमस्माभिरवश्यं निर्वर्तयितव्यः। भूयान् वेशे विटसंनिपातः । (परिक्रम्य)

अये को नु खल्वेष रोहितकीयैर्मार्दंगिकैः कांस्यपत्रवेणुमिश्रैर्यौधेयकवर्णैरुपगीयमानः एकश्रवणावलंबितकुरंटकशेखरो विरलमपसव्यमाकुलदशमुत्तरीयमपवर्तिकया संक्षिपन्मुहुर्मुहुः प्रकटै कस्फिक् सव्येन पाणिना मद्यभाजनमुत्क्षिप्य नृत्यन्नापानमण्डपं हासयति । (निर्वर्ण्य) आः ज्ञातम् । एष हि सत्राहिलकपुत्रः सर्वधूर्तपरिहासैकभाजनभूतो वेशकुक्कुटो बाष्पो धान्वः । भो यत्सत्यं न कदाचिदप्येनममत्तमपीतं वा पश्यामि भवायममुंक्षित हस्तो माषकार्धेनापि । तत्कुतोऽस्यैतदुपपद्यते । (वितर्क्य) हन्त विज्ञातम् । एष हि पुरोभागी लज्जावियुक्तः सर्वंकषः सार्वजनीनत्वात् —

आबद्धमण्डलानां पिबतामुपदंशमुष्टिमादाय ।
प्रविशति बाष्पो मध्यं नटनटीचेटाश्च बन्धानां ॥ ॥ २१ ॥

अहो नु खल्वस्य पानोपार्जने विज्ञानम् । तदलमनेनाभिभाषितेन । इतो वयं (परिक्रम्य) इदमपरं जङ्गमं जीर्णोद्यानं विटजनस्य । एषा हि पुराणपुंश्चली सरणिगुप्ता नाम कामदेवायतनाद् देवताया उपयाचितमभिनिर्वर्त्य स्फुटितकाशवल्लरीश्वेतमागलितमंसदेशादुपरि केशहस्तमुपन्यस्यन्ती सद्योधौतनिवसना विगलितमुत्तरीयमेकांसे प्रतिसमादधाना बलिविक्षेपोपनिपतितैर्बलिभृतैः परिवृतां मयूरं नृत्यन्तमपाङ्गेनावलोकयन्ती मकरयष्टिं प्रदक्षिणीकरोति । भोः यत्सत्यमद्याप्यस्याश्चिरातिक्रान्तं यौवनविभ्रमं विलासशेषं कथयति । तथाहि —

श्वेताभिर्नखराजिभिः परिवृतौ व्यावृत्तमूलौ स्तनौ
सृक्किण्योः शिथिलश्च मध्यगडुलो निष्पीतपूर्वोऽधरः ।
सभ्रूक्षेपमुदाहृतः परिचयादद्यापि युक्तोऽन्तरः
रूपं हि प्रहृतं प्रसह्य जरया नास्या विलासा हृताः ॥ ३२ ॥

तन्न शक्यमेनामनभिभाष्यातिक्रमितुम् । एषा ह्यस्माकं प्रियवयस्यमार्दंगिकं स्थाणुमित्रं मित्रं व्यपदिशन्ती क्रौञ्चरसायनोपयोगमात्मनः प्रकाशयति । तत्कथमेनामुपसर्पामि । (विचिन्त्य) आ ज्ञातम् । अस्या हि इतस्तृतीयेऽहनि तपस्वी स्थाणुमित्रश्चुम्बनातिप्रसङ्गात्तथा बीभत्समनुभूतवान् । अहो धिगकरुणो रागः --

चुंबनरक्तं सोऽस्या दशनं च्युतमूलयात्मनो वदने ।
जिह्वामूलस्पृष्टं खादिति कृत्वा निरष्ठीवत् ॥ ॥ ३३ ॥

तत्कामं वेशमवतितीर्षुस्तीर्थमतिक्रामन्वञ्चितः स्याम् । अथवा, आविष्कृतं स्यात् स्थाणुमित्रवदने दन्तनिपतनम् । तन्नाभिगमनेन व्रीडां पुनरुक्तीकरोमि । सर्वथा नमोऽस्यै । साधयामस्तावत् । (परिक्रम्य) एषोऽस्मि वेशमवतीर्णः । अहो तु वेशस्य परा श्रीः । इह हि —— एतानि पृथक्पृथङ्निविष्टानि रुचिरवप्रनेमिसालहर्म्यशिखरकपोतपालीसिंहकर्णगोपानसीवलभीपुटाट्टालकावलोकनप्रतोलीविटङ्कप्रासादसम्बाधानि असम्बाधकक्ष्याविभागानि भागे निर्मितानि सुनिर्मितरुचिरखातपूरितसिक्तसुषिरफूत्कृतोत्कोटितलिप्रलिखितसूक्ष्मस्थूलविविक्तरूपशतनिबद्धानि बन्धसन्धिद्वारगवाक्षवितर्दिसंजवनवीथीनिर्व्यूहकानि एकद्वित्रिपादपालंकृतमाध्यकोद्देशानि उद्देश्यवृक्षकहरितकफलमाल्यषण्डमण्डितानि पुण्डरीकशबलितविमलवापीतोयानि तोयान्तरविहितदारुपर्वतकभूमिलतागृहचित्रशालालंकृतानि परार्ध्यमुक्ताप्रवालकिङ्किणीजालाविष्कृतपरिपुष्कराणि उच्छ्रितसौभाग्यवैजयन्ती-

पताकानि उत्पतन्तीव गगनतलमवनितलात् भवनवरावतंसकानि वार-मुख्यानाम् । यत्रैते —

आसीनैरवलीढचक्रवलयैर्मीलद्भिरावन्तिकै-
र्धौर्याल्हकिरातसंगतधुरास्तिष्ठन्ति कर्णीरथाः । (?)
एते च द्विगुणीकृतोत्तरकुथा निद्रालसाधोरणाः
कांबोजाश्च करेणवश्च कथयन्त्यन्तर्गतान् स्वामिनः ॥ ३४॥

अपि चास्मिन्नुद्देशे—

नयनसलिलैर्येरेवैको व्रजन्नतिवाह्यते
प्रततविसृतैस्तैरेवान्यो गृहानभिनीयते ।
अकृशविभवेष्वासामास्था तथापि कृतव्ययाः
सपत्नुपतिता निर्भत्स्यन्ते बलात्किल मातृभिः ॥ ३५ ॥

(परिक्रम्य)

१. इयमनुनयति प्रियं क्रुद्धमेषा प्रियेणानुनीता प्रसीदत्यसौ सप्ततन्त्रीमविर्धट्टयन्ती कलं काकलीपञ्चमप्रायमुत्कण्ठिता वल्गुगीता-पदेशेन विक्रोशति ॥

२. इयमुपाहितदर्पणा कामिना मण्ड्यते कामिनी कामिनो मौलिमेषा निबध्नात्यसौ शारिकां स्पष्टमालापयत्येष मत्तो मयूरोऽनया चूतपुष्पेण सन्तर्जितो नृत्यति ॥

३. कथमियमतिकन्दुकक्रीडया मध्यमायासयत्यल्पमेषा प्रि-येणोपविष्टा सहाक्षैः परिक्रीडति प्रौढया चानयैतत्स्वयं लिख्यते चित्र-माख्यायिकासौ पुनर्वाच्यते ॥

४. अलमलमतिसंभ्रमेणास्यतां वासु भद्रे चिराद्दृश्यसे किं ब्र-वीष्य"द्य तं प्रष्टुमर्हस्यहं येन मुग्धातथावञ्चिते"ति प्रसाद्यासि नः स्व-स्तिते तत्तथा साधयामो वयम् ॥ (परिक्रम्य) इदमपरं सुहृत्पत्तनमुप-

स्थितम्। एष हि स बाल्हिकः काकायनो भिषग्गैशानचन्द्रिः हरिश्चन्द्रश्चन्द्र इव कुमुदवापीं वेशवाटीमवभासयन्नित एवाभिवर्तते । तत्किमस्येह प्रयोजनम् । (विचिन्त्य) आ ज्ञातं एष हि तस्याः पूर्वप्रणयिन्या यशोमत्या भगिनीं प्रियंगुयष्टिकां कामयते । अजानपि रहस्येनातिसन्धत्ते । तन्नशक्यमेनमप्रतिपद्य गन्तुम् । यावदुपसर्पामः । (उपगम्य) अंभो वेशबिसवनैकचक्रवाक कुतो भवान् । किं ब्रवीषि—"एष हि तस्याः प्रियसख्यास्ते कनीयसीं प्रियंगुयष्टिकामौषधेन संभाव्यागच्छामि" इति । न खलु तस्याः सुरतसुभिक्षाया आमयात्रसन्नो मदनाग्निसन्धुक्षणीयदीपनीयकमुपदिष्टवानासि । किं ब्रवीषि—"मुक्तः परिहासः कष्टा खलु तस्याः शिरोवेदना" इति । वयस्य यत्सत्यं । किं ब्रवीषि—"कः सन्देहः, कृच्छ्रसाध्या" इति । एव मेतत् । शिरोवेदना नाम गणिकाजनस्य लक्षण्याधैर्यौतकम् । पश्यतु भवान्—

ललाटे विन्यस्य क्षतजसदृशं चन्दनरसं
मृणालैः क्रीडन्ती कुवलयपलाशैः सकमलैः ।
सलीलं भ्रूक्षेपैरनुगतसुखप्राश्निककथा
विरक्ता रक्ता वा शिरसिरुजमाख्याति गणिका ॥ ३६ ॥

किं ब्रवीषि—"सदापि नाम त्वं कर्कशपरिहासः । एष खलु तामौषधं प्रपाय्यागच्छामि" इति । युक्तमेतत् । असंशयं हि—

धून्वन्त्याः करपल्लवं वलयिनं घ्नन्त्याः पदा कुट्टिमं
विभ्रान्त्या (त्या) श्च्युतमंशुकं सरशनं नाभेरधः पाणिना ।
तस्या दीर्घतरीकृताक्षमपिबः केशग्रहैराननं
बाला त्वद्दशनच्छदौषधमलं सात्रा त्वया पायिता ॥ ३७ ॥

किं ब्रवीषि— "वयस्य एव तथा विश्वास्यति" इति । चोर यदि न पुनरस्माद्रहस्येनावक्षेप्स्यसि । किन्त्वद्य सर्वविटैःसर्वविटमहत्तरस्य भ-

द्विजीमूतस्य गृहे केन चित्प्रयोजनेन सन्निपतितव्यम् । तद्वयस्योऽप्यर्हीनकालमागच्छेत् । किं ब्रवीषि — "विदितमेवैतद्विटजनस्य यथा विष्णुनागप्रायश्चित्तदानायापराह्णे समागन्तव्यमिति । तद्गच्छतु भवान् । अहमप्यागच्छामि" इति । तथा नाम । स्वस्ति भवते । साधयामस्तावत् । (परिक्रम्य) कथमिदं सर्वविटैर्विदितम् । तेनह्यल्पपरिश्रमोऽस्मि संजातः । केवलं वेश्यासुहृत्समागमैः कालोऽनुपालयितव्यः । अये कस्य खल्वयमहूणो हूणमण्डनमण्डितः आर्यघोटकः पाटलिपुत्रिकायाः पुष्पदास्या भवनद्वारमाविष्करोति । (निर्वर्ण्य) आ ज्ञातं एभिरिहावद्धश्वेतकाष्ठकार्णिकाप्रहसितकपोलदेशैर्बद्धकैरसज्जमप्यसकृत्सज्जमितिसांजलि प्रतिवादिभिर्जटाडिंडिभिः सूचितः सेनापतेः सेनकस्यापत्यरत्नं भट्टिमघवर्मा भविष्यति । तन्नशक्यमेन मनभिभाष्यातिक्रमितुम् । अतिक्रमन् हि स्नेहमाध्यस्थ्यं दर्शयेयम् । यावदेनमुपसर्पामि । (उपेत्य) भोः कः सुहृद्गृहे (कर्णं दत्वा) एष खलु भट्टिमघवर्मा मामाह्वयति । किं ब्रवीषि — "वयस्य किमद्याप्यपूर्वप्रतीहारोपस्थानेन चिरोत्सन्नो राजभावोऽस्मास्वाधीयते । स्थीयतां मुहूर्तम् । आगच्छामि" इति । सखे स्थितोऽस्मि । (विलोक्य) इत इतो भवान् । एष खलु पुलिनावतीर्णवृषभपदोद्धरणस्खलैश्चरणपदविन्यासैर्भवनकक्ष्यामलं कुर्वन्नित एवाभिवर्तते भट्टी । अहो नु खल्वस्य विलासेष्वभ्यासः । वेशो विलास इत्युपपन्नमेतत् । अपि च —

विलोलभुजगामिना रुचिरपीवरांसोरसा
विलासचतुरभ्रुवा मुहुरपाङ्गविप्रेक्षिणा ।
अनेन हि नरेन्द्रसद्म विशता पदैर्मन्थरै-
रवीणममृदङ्गमेकनटनाटकं नाट्यते ॥ ३८ ॥

यावदेन मालपामि । भट्टिमघवर्मन् किमयमतिदिवाविहारेण सुहृज्जन उत्कण्ठ्यते । साधु मुहूर्तमपि तावद्युष्मद्दर्शनेनानुगृह्येत । एष खलु

विहसन्नाकुलापसव्यपरिधानं श्वासविषमिताक्षरं स्वागतमित्यंजलिनाऽभ्युपैति । भो यद्येतावदनेनाद्यैव पुष्पदासी पुष्पवतीति महामाख्याता, तथापि कथमुपभुक्तैव । (विचिन्त्य) लाटडिंडिनो नामैते नातिभिन्नाः पिशाचेभ्यः । कुतः ? सर्वो हि लाटः —

नग्नः स्नाति महाजनेऽम्भसि सदा नेनेक्ति वासः स्वयं
केशानाकुलयत्यधौतचरणः शय्यां समाक्रामति ।
यत्तद्भक्षयति व्रजन्नपि पथा भग्ने पटं पाटितं
छिद्रेचापि सकृत्प्रहृत्य सहसा लाट (लोल) श्चिरं कत्थते ॥ ३९

सर्वथा कृतमनेन स्वदेशौपयिकम् । मातावद्धोः—
अविचिन्त्य फलं वल्यास्त्वया पुष्पवधः कृतः ।
किं ब्रवीषि — "कथं" इति ।
इदं हि रजसाध्वस्तमुत्तरीयं विलोक्यताम् ॥

किं ब्रवीषि — "शय्यान्तावलंबितं तांबूलावसिक्तमेतदवगच्छामि" इति। मातावत् । इदं क्षुद्रमुक्ताफलावकीर्णमिव ललाटं स्वेदबिन्दुभिः किमिति वक्ष्यति । एष पार्श्वमपधायोच्चैः प्रहसितः । हण्डे जघन्यकामुक कथमनयाच्छलितः । किं ब्रवीषि — "कश्छलितो नाम, ननु गृहीतोऽस्मि । श्रूयताम् । सा हि —

विपुलतरललाटा संयताग्रालकत्वात्
रुचिरजघनभारा वाससार्धोरुकेण ।
विवृततनुरपोढप्रागलंकारभारा
कथय कथ मगम्या पुष्पिता स्त्री लता स्यात् ॥ ४० ॥

अपि च, श्रोतुमर्हति भवान् —
पार्श्वावर्तितलोचना नखपदान्यालोकयन्ती मया
दृष्टा चेपदवाङ्मुखी स्वभवनमत्यातपेऽवस्थिता ।

संगृह्याथ करद्वयेन कठिनावुत्कंपमानौ स्तनौ
प्राविश्यान्तरगारमर्गळवता द्वारं करेणावृणोत् ॥ ४१ ॥

ततोऽहमनुद्रुतं प्रविश्य—

कचनिग्रहदीर्घलोचनां रभसावर्तितवलितस्तनीं ।
किमसीतिनहीतिवादिनीं समचुंबं सहसा विलासिनीं" ॥इति।

भोः चित्रः खलु प्रस्तावः । प्रच्छामस्तावदेनां । ततस्ततः । किं ब्रवीषि— "अथ सखे

समुपास्थितस्य जघनं रशनात्यागाद्विविक्ततरबिंबम् ।
पाणिभ्यां व्रीळितया निमीलिते मेऽनया नयने" इति। ।४२॥

हीं धिक्त्वामस्तु । अविकत्थन उद्वेजनीयोह्यसि । निन्द्यश्चार्यजनस्य संवृत्तः । ।किं ब्रवीषि—एव मप्यनुगृहीतोऽस्मि । न त्वया महाभारते श्रुतपूर्वं —

यस्यामित्रा न बहवो यस्मान्नोद्विजते जनः ।
यं समेत्य न निन्दन्ति स पार्थ पुरुषाधमः ॥ इति ४३ ॥

भो एतत्खलु डिण्डित्वं नाम । सर्वथापि साधु भोः प्रीतोऽस्मि भवतोऽनेन डिण्डित्वेन । सर्वथा विटेष्वाधिराज्यमर्हसि । अयमिदानीमाशीर्वादः—

किं ब्रवीषि "अवहितोऽस्मि" इति । श्रूयताम् ॥

प्रभातमवगम्य पृष्ठमुपगृह्य सुप्तस्य ते
प्रगल्भमधिरुह्य पार्श्वमपवाससैकोरुणा ।
तथैव हि कचग्रहेण परिवृत्य वक्त्राम्बुजं
पिबत्वथ च पाययत्वधरमात्मनस्त्वां प्रिया ॥ ४४ ॥

एष खल्वनुगृहीतोऽस्मीत्युक्त्वा पलायते नमोऽस्तु भगवते । साधयामास्त्वावत् ॥ (परिक्रम्य)

अये का नु खल्वेषा स्वभवनावलोकन मप्सरा विमानमिवालङ्करोति ॥ एषा हि सा काशीनां वारमुख्या पराक्रमिका नाम सुखमतिपिञ्छोलया क्रीडन्ती रूपलावण्यविभ्रमैर्लोचनमनुगृह्णाति । आश्चर्यम् ॥

विरचितकुचभारा हेमवैकक्ष्यकेण
स्फुटविवृतनितम्बा वाससार्धोरुकेण ।
विचरति चलयन्ती कामिनां चित्तमेषा
किसलयमिव लोला चञ्चलं वेशवल्याः ॥ ४५ ॥

अपि च,

गण्डान्तागलितैककुण्डलमणिच्छायानुलिप्तानना
मन्वभ्यस्ततया हिकारपिशुनैः श्वासैरवाक्तालुभिः ।
पिञ्छोलामधरे निवेश्य मधुरामावादयन्तीमिमां
गण्डूकस्वनशङ्कितो गृहशिखी पर्येति वक्राननः ॥ ४६ ॥

किंनु खल्वस्या उदवसितादिन्द्रस्वामिनो रहस्यसचिवो हिरण्यगर्भको निष्पत्य इत एवाभिवर्तते । किमत्राश्चर्यम् । इन्द्रस्वामी हिरण्यगर्भको वेश इति संहितमिदं तप्तं तप्तेनेति । एष मामञ्जलिनोपसर्पति । हण्डे हिरण्यगर्भक किमिदं वेशदेवायतनमपरान्तपिशाचैर्विध्वंसयितुमिष्यते ? किंब्रवीषि "एष खलु स्वामिनोऽस्मि विदेशरागेणैवं धुरि नियुक्तः । एषा हि पूर्वं पञ्चसुवर्णशतानि गणयति । अधुना सहस्रेणाप्युपनिमन्त्रितापि विनियुज्यमाना नैवशक्यते तीर्थमवतारयितुम् । तदर्हसि त्वमपि तावदेनां गमयितुम्" इति ॥

अत्याजैवःखल्वसि । न हि शतसहस्रेणापि प्राणा लभ्यन्ते । किं ब्रवीषि । "किञ्चास्याः प्राणसन्देहे कारणमस्मासु पश्यसि" इति । आविष्कृतं हि तत्रभवत्या भर्तृस्वामिनश्चामरग्राहिण्या कुटङ्गदास्या स्वामिनः संसर्गात्तथाभूतं व्यसनमनुभूतम् । किं ब्रवीषि । "आलभस्व तावदिदं मे शरीरम् । सत्यमेवेदम्" इति । असत्येन न स्वामिनमेवं ब्रूयात् ॥

किं ब्रवीषि "चिराभ्यस्तमेवेदमस्मत्स्वामिपादानाम्" इति । अत एव न शक्यमन्यथाकारयितुं, नचैतदेवं, पश्यतु भवान् ॥

काव्ये गान्धर्वे नृत्तशास्त्रे विधिज्ञं
दक्षं दातारं दक्षिणं दाक्षिणात्यम् ।
वेश्या का नेच्छेत्स्वामिनं कोङ्कणानां
स्याच्चेदस्य स्त्रीष्वार्जवात्सन्निपातः ॥ ॥ ४७ ॥

अपि च

सञ्चारयन्कलभकं गजनर्तकं वा
वेश्याङ्गणेषु भगदत्त इवेन्द्रदत्तम् ।
उद्वीक्ष्यते स्तननिविष्टकराम्बुजाभि-
र्व्याघ्रो मृगीभिरिव वारविलासिनीभिः ॥ ॥ ४८ ॥

अपिचैषा भर्तुर्नोऽधिराजस्य स्यालं पारशवं कौशिकं सिंहवर्माणं मित्रमपदिशन्ती सर्वान्कामिनः प्रत्याख्यानेन व्रीलयति । किं ब्रवीषि "तस्यैषातिकामितयात्रमन्यते" इति । युष्मद्देशौपयिकमेव किल सततमतिसेवनम् ॥

किं ब्रवीषि "देशौपयिकमदेशौपयिकमिति नावगच्छामि । विस्पष्टम- भिधीयताम्" इति ॥

एवमनुगृहीतः कथं न कथयिष्यामि । श्रूयताम्—

श्रवणनिकटजैर्नखावपातैः
वनगजदम्य इवाङ्कितः प्रतोदैः ।
विवृतजघनभूषणां विवस्त्रां
वृष इव वत्सतरीमिहोपयाति ॥ ॥ ४९ ॥

किं ब्रवीषि "तेन ह्यनेनैवोपायनेनोपस्थास्यामि" इति ॥
यद्येवमिन्द्रस्वामी विज्ञाप्यः—

दशनमण्डलचित्रककुन्दरां
दयितमाल्यनिवासितमेखलाम् ।
त्वदपरं प्रति सा जघनस्थलीं
न विवृणोति वृतापि शतं शनैः ॥ ॥ ५० ॥

स्वस्ति भवते । साधयामस्तावत् (परिक्रम्य)
अये को नु खल्वेषः शौर्पकारिकायाः शमदास्या भवनान्निष्क्रम्य डिण्डि- गणपरिवृतो वेशमाविष्करोति । (विलोक्य) ॥ एतज्जङ्गमं विटतीर्थमुदीच्यानां बाह्लीकानां कारूशमलदानां चेश्वरो म- हाप्रतीहारो भद्रायुध एषः ॥

विरचितकुन्तलमौलिः श्रवणार्पितकाष्ठविपुलसितकलशः ।
जनमालपञ्जकारैरुन्नाटयतीव लाटानाम् ॥ ५१ ॥

का च तावदस्य लाटेषु साधुदृष्टिः एतावत् । सर्वो हि लाटः

संवेष्ट्य द्वावुत्तरीयेण बाहू
रज्वा मध्यं वाससा सन्निबध्य ।

प्रत्युद्गच्छन् संमुखनिः शकारैः
पादापातैरंसकुब्जः प्रयाति । ॥ ५२ ॥

अपि च

उरसि कृतकपोतकः कराभ्यां
वदति जजेति यकारहीनमुच्चैः ।
समयुगलनिबद्धमध्यदेशो
व्रजति च पङ्कमिव स्पृशक्कराग्रैः ॥ ॥ ५३ ॥

सर्वथा नास्त्यपिशाचमैश्वर्यं । अथवास्यैवैकस्य देशान्तरविहारो गुणः । कुतः ? ॥

येनापरान्तशकमालवभूपतीनां
कृत्वा शिरस्सु चरणौ चरता यथेष्टम् ।
कालेऽभ्युपेत्य जननीं जननीं च गङ्गां
आविष्कृता मगधराजकुलस्य लक्ष्मीः ॥ ॥ ५४ ॥

अपि च,

वेलानिलैर्मृदुभिराकुलितालकान्ता
गायन्ति यस्य चरितान्यपरान्तकान्ताः ।
उत्कण्ठिताः समवलंब्य लतास्तरूणां
हिन्तालमालिषु तटेषु महार्णवस्य ॥ ॥ ५५ ॥

किंतद्गीतम्

उहि माणुसोत्ति भट्टाउहेण ण विळिश्चइ आउहे असो ण्णारितस्सकम्म-सिद्धिं विघ सुखलु भुजंति सोकरासिद्धिं ॥ इति ।

(परिक्रम्य)

एष खलु प्रद्युम्नदेवायतनस्य वैजयन्तीमाभिलिखति । एतड्डिण्डित्वं नाम भोः । डिण्डिनो हि नामैते नातिविप्रकृष्टा वानरेभ्यः । भोः किञ्च तावदस्य डिण्डिकेषु प्रियत्वम् । डिण्डिनो हि नाम—

आलेख्यमात्मलिखिभिर्गमयन्ति नार्श
सौधेषु कूर्चकमषीमलमर्पयन्ति ।
आदाय तीक्ष्णतरधारमयोविकारं
प्रासादभूमिषु घुणक्रियया चरन्ति ॥ ॥ ५६ ॥

किं खतावदयं लिखति (विलोक्य)

निरपेक्ष इति । स्थाने खल्वस्येदं नाम । सुष्ठु खल्विदमुच्यते अर्थं नाम शीलस्यापहरतीति । तथा ह्येष धान्त्रस्तां नः प्रियसखीमनवेक्षया वेशतापसीव्रतेन कर्शयति । सा हि तपस्विनी—

नेत्राम्बु पक्ष्मभिरराल घनासिताग्रैः
नेत्राम्बुधौतवलयेन करेण वक्त्रम् ।
शोकं गुरुं च हृदयेन समं बिभर्ति
त्रीणि त्रिधा त्रिवलिजिह्नितरोमराजिः ॥ ५७ ॥

तदुपालप्स्ये तावदेनम् । भो भागवन्निरपेक्ष करुणात्मकस्य भवतो मैत्रीमादाय वर्तमानस्य त्वयि मुदितायां योषिति युक्तमुपेक्षाविहारित्वम् ?

किं ब्रवीपि "गृहीतो वञ्चितकस्यार्थः । स्पृष्टोऽस्म्युपासकत्वेन । ईदृशः संसारधर्म इत्युक्तं तथागतेन" इति । मा तावद्भोः । तस्यामेव भगवतस्तथागतस्य वचनं प्रमाणं नान्यत्र ।

किंब्रवीषि "कुत्र वा कदा वा मम तथागतस्य वचनमप्रमाणम्" इति ॥ इयं प्रतिज्ञा ? किं ब्रवीषि "कः सन्देहः" इति । भद्रमुख श्रूयताम्—

श्रमनिस्सृतजिह्वमुन्मुखं
हृदि निस्सङ्गनिखातसायकम् ।
समवेक्ष्य मृगं तथागतं
स्मरसि त्वं न मृगं तथागतम् ॥ ५८ ॥

एष प्रहसितः । किं ब्रवीषि "न खलु तथागतशासनं शङ्कितव्यम् । अन्यद्धि शास्त्रमन्यथा पुरुषप्रकृतिः न वयं वीतरागाः" इति । यद्येवमर्हति भवांस्तत्रभवतीं राधिकां तथाभूतां शोकसागरादुद्धर्तुम् । किं ब्रवीषि "यदाज्ञापयति वयस्योऽयमञ्जलिः साधुमुक्तोऽयम्" इति । सर्वथा दुर्लभस्ते मोक्षः किन्त्वियमाशीः प्रतिगृह्यताम् ॥

विप्रोष्यागत उत्सुकामवनतामुत्सङ्गमारोपय
स्कन्धे वक्त्रमुपोपधाय रुदतीं भूयस्समाश्वासय ।
आबद्धां महिषीविषाणविषमामुन्मुच्य वेणीं ततो
लंबं लोचनतोयशौण्डमलकं छिन्धि प्रियायाः स्वयम् ॥

एष प्रहस्य गतः । इतो वयम् । (परिक्रम्य) अये को नु खल्वेष इत एवाभिवर्तते ॥

दुश्चीवरावयवसंवृतगुह्यदेशो
बस्ताननः कपिलरोमशपीवरांसः ।
आयाति मूलकमदन् कपिपिङ्गलाक्षो
दाशेरको यदि न नूनमयं पिशाचः ॥ ६० ॥

भवतु, विज्ञातम् । "एष खलु भ्रातुरथवा वयस्यस्य तत्रभवतो दाशेरकाधिपतेरपत्यरत्नस्य गुप्तकुलस्यावासे दृष्टपूर्वः, तत् किमस्येह प्रयोजनम् ? एषमां कृताञ्जलिरुपसर्पति । किं ब्रवीषि ? 'गुप्तकुलेण पेक्खासि ओवारिदपणपच्चादिच्चु गणिका कावि विदेप्पयतित्ति इनप्पुं आणा दिहूणागुपोरवीथीएअषेष आउंणि काचि गणिकाए दीषइतहम्मि तप्प अदं, एतेणय्यं समंत्ळेंतोणिप्पुदिष्ष ए अम्बाए मेषापितं तुर्यमर्थकेण दाणिगणिकाकामुप्पूळिद अष्षेण कुळंधित्थेव कामाण अप्षे जइ गच्छामि विषकहे दण्डितुं होमिरिदिवशाविषु एक एवंति" अहो देशवेषभाषादाक्षिण्यसम्पदुपेतो गुप्तकुलस्य युवराजस्य मदनदूतो वेश एव व-

र्तमानो वेशमापणाभिधानेन पृच्छति । तन्न शक्यमीदृशं रत्नमवबोध्य विनाशयितुम् । इदृशी एवास्तु । एवं तावदेनं वक्ष्ये । अत्र राजवीथ्यां लावणिकापणेषु मृग्यतां गणिका । एष प्रहर्षात् प्रणिपत्य गतः । इतो वयम् । (परिक्रम्य) कनु खल्विदानीं दाशेरकदर्शनावधूतं चक्षुः प्रक्षाळयेयं (विलोक्य) भवतु, दृष्टम् । एतद्धि तदस्माकं पूर्वप्रणयिन्याः शूरसेनसुन्दर्या निवेशनम् । कथमपावृतपक्षद्वारमेव । यावदेतत् प्रविशामि । (प्रविष्टकेन) कनु खल्विमं पादप्रचारश्रममपनयेयं । भवतु, दृष्टं । इयं खलु प्रियंगुवीथिका प्रियेवोत्सङ्गेन शिलातलेन मामुपनिमन्त्रयते । यावदत्रोपविशामि । (विलोक्य) किमिहाभिलिखितम् ॥ (वाचयति)

सखि प्रथमसङ्गमे न कलहास्पदं विद्यते
नचास्य विमनस्कता मभृणवं नवा कल्यताम् ।
युवान मभिसृत्य तं चिरमनोरथप्रार्थितं
किमस्यमृदितांगरागरचना तथैवागता ॥ इति ।

(विचिन्त्य) कस्याश्चित् खल्वियं केनापि प्रत्याख्यातप्रणयाया दौर्भाग्यघोषणा घुष्यते । तत् कंनु खलु पृच्छेयं ? (कर्णंदत्वा) अये इयं चरणाभरणशब्दसूचिता शूरसेनसुन्दरीत एवाभिवर्तते । यैषा —

आलंब्यैकेन कान्तं किसलयमृदुना पाणिना छत्रदण्डं
संगृह्यैकेन नीवीं चलमणिरशनां भ्रश्यमनांशुकान्ता ।
आयात्यभ्युत्स्मयन्ती ज्वलिततरवपुर्भूषणानां प्रभाभिः
सज्योतिष्का सचन्द्रा सविहगविरुता शर्वरीदेवतेव ॥ ६२ ॥

भो यत्सत्यमभ्युत्थापयतीव मामस्यास्तेजस्विता । एषा मां कपोतकेनोपसर्पति । अलमस्मानुपचारेण प्रत्यादेष्टुम् । किमाह भवती ? "चिरादपि तावत् स्वामिनामुपगतानामुपचारेण तावदयं जन आत्मा-

नमनुगृह्णीयात्" इति । अलमलमत्युपालम्भेन । इदमुचितमुत्सङ्गासनमनुगृह्यताम् । एषा मे शिरसा प्रतिगृहीतं इत्युक्त्वा शिलातलार्धं श्रोणीबिम्बेनाक्षिपन्तीवोपविशति । अये न खल्वत्रोपवेष्टव्यम् । किमाह भवती ? 'किमर्थं' इति । नन्विदं कस्या अपि चरितं केनापि प्रत्याख्यातप्रणयायाः श्लोकसंज्ञकमयशोऽस्माभिर्दृष्टम् । (कथं हस्ताभ्यां प्रमाष्टि) चोरि न शक्यमिदं प्रमाष्टुम् । इदं हि मे हृदि लिखितम् । एषा किं वारयति ? किमाह भवती । 'जानीत एवास्मत्स्वामी— यथास्मत्सख्या कुसुमावतिकायाः प्रियवयस्यं चित्राचार्यं शिवस्वामिनं प्रति महान् मदनोन्मादः' इति । सुष्टु जानीमः, किञ्च तत्रभवन्त्या कुसुमावतिकया तत्रभवाननभिगमनेनानुगृहीतः । किमाह भवती ? 'मदनविक्लवस्य स्त्रीहृदयस्यायं स्वभावः, कृतमनया स्त्रीचापल्यं' इति । चित्रः खलु प्रस्तावः, पृच्छामस्तावदेनाम् । भवति विस्रंभः पृच्छति, न पररहस्यकुतूहलिता । तत् कथमनयोश्चिराभिलषितसमागमोत्सवो निर्वृत्तोऽभूत् ? किमाहभवती ? "श्रूयतां" इति । अवहितोऽस्मि । किमाह भवती ? "तस्यां किल वारुणीमदलक्षेण तत्रभवन्तमनुगृहीतायां तत्रभवतो वयस्यस्य

> गतः पूर्वो यामः श्रुतिविरसया मल्लकथया
> द्वितीयो विक्षिप्तः पललगुडबाह्यव्यतिकरैः ।
> तृतीयो गात्राणामुपचयकथाभिर्विगलितः
> ततस्तान्निर्वृत्तं कथयितुमलंत्वघ्यपियत् ॥ ६३ ॥ इति ।

सुन्दरि कुतस्त्वयैतदुपलब्धं ? किमाहभवती ? "तस्यैव सख्युरुदवसितादागतात् प्रतीहारपद्मपालादुपलब्धवृत्तान्तया मयैषश्लोकः सुखप्राश्निकहस्तेनानुप्रेषितः । ततः सातेनैव परिचारकेण मामुपास्थिता लज्जाविलक्षमुपहसन्तीव मामुक्तवती— नच रहस्यानाख्यानेन भवतीमाक्षेप्तुमर्हामि, श्रूयतामिदमपूर्वं — इति । ततोऽनयायथावृत्तं सर्वं मह्यमाख्या-

तम् । तेन हि त्वमप्यनेन श्रोत्रामृतेन संविभक्तुमर्हसि " इति । एषा सतलघातं प्रहस्य कथयति । सुन्दरि किं ब्रवीषि ? "श्रूयतामिदामिदानीं यन्मम प्रियसख्या कथितम् । सा हि मामुक्तवती — प्रियसखि स हि मया—

आलिङ्गितोऽपि स मया परिचुंबितोऽपि
श्रोण्यर्पितोऽपि करजैरुपचोदितोऽपि ।
खिन्नास्मि दार्विव यदा न स मामुपैति
शय्याङ्कमेकमुपगूह्य ततोऽस्मि सुप्ता ॥ ६४ ॥ इति ।

ततो मयोक्ता— कृच्छ्रं बतानुभूतवत्यसि । किमेतन्नावगच्छामि इति । ततो निश्वस्य मामुक्तवती—

यदा सर्वोपायैश्चटुभिरुपयातोऽपि स मया
न यत्नं कुर्वाणो मयि मनसिजेच्छामलभत ।
ततस्तस्मिन्सर्वप्रतिहतविधानास्मि सहसा
स्वदौर्भाग्यं मत्वा स्तनतटविकम्पं प्ररुदिता ॥ ६५ ॥

ततस्समां रुदतीमुत्सङ्गमारोप्य मुहुर्मुहुर्व्यर्थैश्चुंबनपरिष्वंगैराश्वासयन्नाम दृढमात्मानमायासितवान । उक्तं च मया — किं ते पाणिभ्यां स्पृष्टया— इति । ततो व्रीळाञ्चितसाध्वसस्वेदवेपथुः शुष्यता मुखेन नातिप्रगल्भाक्षरमुक्तवान —

न निन्दितुमनिन्दिते सुभगतां निजामर्हसि
च्युतं हि मम चक्षुरेतदभितो निधिं पश्यतः ।
प्रधाय किल मेदसो यदपिबं पुरा गुग्गुलुं
तदेतदुपहन्ति मे व्यतिकरामृतं त्वद्गतम् ॥ इति ॥ ६६ ॥

ततो मया चिन्तिम् —

मेदःक्षयायपीतोयदिगुग्गुलुरिन्द्रियक्षयं कुरुते ।
धूपार्थोऽपिनकार्यो गुग्गुलुना कमयमानेन (?) ॥ इति ।

एवमावयोश्चिरप्रार्थितमपार्थकं समागमनं प्राप्तकालमिच्छतोः,

रजनीव्यपयानसूचकोनृपतेर्दुन्दुभिपारिपार्श्वकः ।
अपठत्स्तुतिमङ्गळान्यलंसाहिघंटामभिहत्यघांटिकः ॥ ६८ ॥

ततस्तेनैव दक्षिणेनेव सुहृदा तस्मात् सङ्कटात्परिमोचिता कामिना सत्री-
ळं मुहूर्तमनुगम्य प्रेषिता । स्वगृहमागता च त्वया च सुखप्राश्निका-
भिधानेनोपहसितास्मि । तदेतत्ते सर्वमशेषतः कथितम् । अहमिदा-
नीं मिथ्या प्रजागरं दिवास्वप्नेनापनेष्यामीत्युक्त्वा मयानुज्ञाता । त-
दनन्तरागतेन स्वामिनाप्येतच्छ्रुतम् " इति । तेनह्यनेनैव परिहासप्ल-
वेन तत्रभवतः शिवदत्तस्य पुत्रं शिवस्वामिनं पुरुषडंभगंभीरकीर्ति-
सागरमवगाहिष्ये । पश्यतु भवती —

यो गुग्गुलुं पिबति मेदसि संप्रवृद्धे
तस्य क्षयं व्रजति चण्ड्यचिरेण मेदः ।
स्त्रीणां भवत्यथ स यौवनशालिनीनां
आलेख्ययक्ष इव दर्शनमात्ररम्यः ॥ ६९ ॥

एषा प्रहस्योत्थिता — यास्यामि — इति । भवत्वलमञ्जलिना ।
इतो वयम् । (परिक्रम्य)

किं नु खल्विमान्युद्दण्डपुण्डरीकवनषण्डशोभानुकारीण्युद्ग्रीववदनपु-
ण्डरीकाणि विस्मयविततक्षमालाशबळानि उरसिनिहितकरपल्लवान्य-
न्योन्यसंज्ञापरिवृत्तकानि निवृत्तकन्दुकपिञ्छोळाकृतकपुत्रकदुहितृकाक्री-
डनकानि वेशरथ्याया प्रांतेभवनच्छासु वेशकन्यकावृन्दकान्यवलोक-
यन्ति ? अये किं नु खल्विदम् ॥

अरञ्जरमिदं लुठत्यथ दृतिः समाकृष्यते
कबन्धमिदमुत्थितं व्रजति किं कुसूलद्वयं ।
भवेत् किमिदमद्भुतं भवतु सांप्रतं लक्षितं
तदेतदुपगुप्तसंज्ञमुदरं समुत्सर्पति ।   (?)

भोः सुष्ठु खल्विदमुच्यते धूर्तपरिषत्सु—

करभोगैर्गुप्तगळो हरिकृष्णः कृष्णएषवनमेषः ।
गोमहिषोहारिभूतिर्दृतिगुप्तोऽनिलाध्मातः ।। (?) इति ।

कथं नु तावदिमं सा तपस्विनी गङ्गायमुनयोश्चामरग्राहिणी पुस्तकवाचिका मदयन्ती प्रियवयस्यं नक्षत्रपवन्तं त्रैविद्यवृद्धं पुस्तकवाचकमुत्सृज्योपगुप्तमनुरक्ता ? तथा चास्य कोमलाभ्यां भुजाभ्यां परिष्वज्यते । अथवा न तस्याः परिष्वङ्गेन प्रयोजनम् । सा हि तपस्विनी निवृत्तकामतन्त्रा रजोपरोधात् केवलं कुटुंबतन्त्रार्थं शब्दकाममनुवर्तते । गम्यश्चायमस्याः । 'अपुमान् शब्दकामः' इति दात्तकीयाः । (विलोक्य) किञ्च तावदयमाविग्न इव । आ ज्ञातम् । तस्या एव मात्रा पणार्थमधिकरणायाकृष्यत इति वेशे मयोपलब्धम् । ततः श्वश्र्वा सह कृतविवादेनानेन भवितव्यम् । महदिदं परिहासवस्तु । न शक्यमस्यातिक्रमणादात्मानं वञ्चयितुम् । यावदेनमुपसर्पामि । (उपेत्य) हण्डे वेशवीथियक्ष कुतो भवान् । एष पादचारखेदात् काकोछ्वासश्रमविषमिताक्षरं -- अयमञ्जलिः -- इत्युक्त्वा स्थितः । स्वस्ति भवते । किं ब्रवीषि ? "एष खलु तया वृद्धपुंश्चल्या सह विवादार्थं गत्वा कुमारामात्याधिकरणादागच्छामि" इति । कथं भवन्तं जयेन वर्धयामः, उताहोस्विन दण्डसाहाय्येन संभावयामः ? किमाह भवान् ? "कुतो जयदण्डाभ्यां सह संयोगः, केवलं क्लेशोऽनुभूयते" इति । कस्मात् ? किं ब्रवीषि ?

अध्यातिर्विष्णुदासो भ्रात्रा किल तर्जितोऽस्मि कोङ्केन ।
द्राक्केनाभिहतोऽहं क्रोशति विष्णुः स्वपिति चात्र ॥ अपिच,
मृगयन्ते तदधिकृता मृगयन्ते पुस्तपालकायस्थाः ।
काष्ठकमहत्तरैरपि विधृतोऽस्मि चिरं मृगयमाणैः ॥ ७० ॥

अपिच ततो मयावधृतम् ।

गणिकायाः कायस्थान कायस्थेभ्यश्च विमृशतो गणिकाः ।
गणिकायै दातव्यं रतिरपि तावत् भवत्यस्यां ॥ ७१ ॥ इति ।

दिष्ट्या कायस्थवागुरादतीतं भवन्तमक्षतं पश्यामि । सर्वथा प्रतिबुद्धोऽसि । इदानीमियमाशीः—

कलमधुररक्तकण्ठी शयने मदिरालसा समदना च ।
वक्त्रापरवक्त्राभ्यामुपतिष्ठतु वारमुख्या त्वां ॥ ७२ ॥

एष सतलघातं प्रहृस्य प्रस्थितः । इतो वयं । (परिक्रम्य) अये अयमपरः—

स्रस्तैर्वङ्क्ष्णाढकान् लाटभक्त्या
दत्त्वा चित्रान् कोऽयमायाति मत्तः ।
विभ्रान्ताक्षो गण्डविच्छिन्नहासो
वेशस्वर्गं किं कृतेऽयं प्रविष्टः ॥ ७३ ॥ भवतु, विज्ञातम् ।

शर्करपालस्य गृहे जातः कीरेण चर्मकारेण ।
एष खलु कोङ्कचेट्यां पिशाचिकायां तृणपिशाचः ॥ ७४ ॥

अपि च,

शर्करपालं पितरं व्यपदिशति भ्रातरञ्च निरपेक्षम् ।
प्रायेण दौष्कुलेयाः सहैव दंभेन जायन्ते ॥ ॥ ७५ ॥

(परिक्रम्य) भोः किं नु खलु प्रच्छेयम्?— किमस्य वेशप्रवेशे प्रयो-

जनं— इति । अये अयं जरद्विटो भट्टिरविदत्त इत एवाभिवर्तते । यावदेनं पृच्छामि । अघो भट्टिरविदत्त कश्चिज्जानीते भवानस्य पुरुषवेताळस्य वेशप्रवेशप्रयोजनम् ? किं ब्रवीषि ? "भवानेव जानीते" इति । तद्गच्छतु भवान् (परिक्रम्य) क्व नु खल्विदं पुरुषकान्तारावगाहश्रान्तं मनो विनोदयेयम् । भवतु दृष्टम् ॥

इदमपरं प्रियसुहृदः सुहृद्भयादर्पितार्गळं भवनम् ।
वेश्यासुरतविमर्देष्वकृतविरामस्य रामस्य ॥ ७६ ॥

तत्कथं प्रविशामि (कर्णं दत्वा)

यथा काञ्चीशब्दश्चरतिविकलो नूपुररवैः
यथा मुष्ट्याघातः पतति वलयोद्घातपिशुनः ।
यथा निश्शूत्कारं श्वसितमपि चान्तर्गृहगतं
ध्रुवं रामा रामं युवतिविपरीतं रमयति ॥ ७७ ॥

तदलमिह प्रविष्टकेन । कः सुरतरथाक्षभङ्गं करिष्यति ? इतो वयम् । (परिक्रम्य) अये अपरः—

दग्धः शाल्मलिवृक्षः कतिपयविटपाग्रशेषतनुशाखः ।
कृष्णः कृशो विटबको वेशनळिन्या मरुपिशाचः ॥ ७८ ॥

भवतु, विज्ञातम् । एष हि सौपरस्तौण्डिकोकिः सूर्यनागः । ततः किमिहास्य प्रयोजनम् ? कथमेष मां दृष्ट्वैवोत्तरीयावकुण्ठनेन मुखमपवार्य कामदेवायतनमपसव्यं कृत्वा प्रस्थितः । भो यदातावदद्य तृतीयेऽहनि बहिश्शिबिके कुटङ्कागारनिकेतनाभिः पताकावेश्याभिः संप्रयुक्तो म्लेच्छश्चवन्धकैर्व्यवहारार्थं श्रावणिकैरधिकरणमुपनीयमानः स्कन्धकीर्तिना बलदर्शकेन स्वामिनो मे विष्णोः स्यालीपतिरिति कृत्वा कृच्छ्रात्प्रमोचित इति वयस्यविष्णुनागेन कथितम् । तत्किमयमिदानीमस्माद्देशसंसर्गान् व्रीळित इवात्मानं परिहरति । (विचिन्त्य) पा-

र्थिवकुमारसन्निकर्षं एनमनया प्रवृत्त्या श्लाघयति । आश्चर्यम् ! गुणवान् खलु गुणवतां सन्निकर्षः । यदयमपि नामैवं गुणाभिमुखः । तन्न शक्यमेनमप्रत्यभिज्ञानेन सकामं कर्तुम् । यावदहमप्ययनं प्रदक्षिणीकुर्वन्नामसंमुखीनमेनं परिहासाबद्धक्रन्देन हन्मि । (परिक्रम्य) एष मां प्रतिमुखमेवावलोक्य प्रतिहसितः । हण्डे सूर्यनाग किमयं वेशनवावतारोऽन्धकारनृत्तमिव सुहृद्वक्षेपेण विफलीक्रियते? किं ब्रवीषि? "क इव ममेहार्थः? अहं हि कारायामवरुद्धस्य मातुलस्य मौद्गल्यस्य पारशवस्य हरिदत्तस्य पूर्वप्रणयिनीमकल्यरूपामद्य वार्तां पृच्छंस्तेनैव प्रहितोऽस्मि। त्वं तु मां कथमप्यवगच्छसि" इति । आश्चर्यमिदं हि — भवतः सुहृद्व्यापारेषु स्थैर्यं, तस्याश्च वारमुख्यायाः पूर्वप्रणयिष्वापद्गतेष्वपि प्रतिपत्तिश्च । अतश्चैनां —

वर्णानुरूपोज्वलचारुवेषां लक्ष्मीमिवालेख्यपटे निविष्टाम् ।
सापह्नवां कामिषु कामवन्तोऽरूपां विरूपामपि कामयन्ते ॥

किञ्च, अतिदुष्करकारिणीञ्चैनामवगच्छामि । कुतः ? असंशयं हि सा —

कारानिरोधादविकारगौरं देवार्चनाजातकिणं ललाटे ।
आस्यं बृहच्छमश्रुवितानगद्धं कालास्थिनिर्भुग्नमिवावलेढि ॥

किमाह भवान् ? "अत एवास्माकमस्यामादरः" इति । भवत्वेवम् ! सुहृदनुरक्तं भवन्तं ख्यापयामो वयम् । एष खलु— प्रसीदतु स्वामी — इति पादमूलयोरुपगृह्णाति । किं ब्रवीषि ? "नार्हति स्वामी ममैव वेशप्रवेशं कचिदपि प्रकाशीकर्तुं" इति । भो वयस्य कश्चान्द्रोदयं प्रकाशयति? ननु यदैव भवांस्तत्र भवत्या रूपदास्याः परिचारिकां कुब्जां प्रति बद्धमदनानुरागस्तदैवैतस्मिन् प्रदेशे उदकतैलबिन्दुवृत्त्या विकसितं यशः । मातावत् भोः —

परिष्वक्ता वक्षः क्षिपति गडुना याति बृहता
लिके भुग्नानेष्टे जघनमुपधातुं समदना ।
सरूपा टिट्टिभ्यां भवति शयिता या च शयने
कथं त्वं तां कुब्जामवनतमुखाब्जां रमयसि ? ॥ ८१ ॥

किं ब्रवीषि ? "शान्तं पापं शान्तं पापं, प्रतिहतमनिष्टम् । स्वागतमन्वाख्यानाय । पश्य तु भवान् —

सविभ्रान्तैर्यातैः करभललितं या प्रकुरुते
मुहुर्विक्षिप्ताभ्यां जलमिव भुजाभ्यां तरति या ।
मुखस्योत्तानत्वाद्गगन इव तारा गणयति
स्पृशेत् कस्तां प्राज्ञः कृमिजनितरोगामिव लताम्?" ॥ इति ।

अहो धिक्कष्टमेवं धर्मज्ञस्य भवतो न युक्तमुपयुक्तस्त्रीनिन्दां कर्तुम् । अपि च, —

यद्यपि वयस्य कुब्जा नालीनालिकाकृशा च गडुला च ।
असतामिव संप्रीतिर्मुखम (?) रणीया भवति यावत् ॥ ८३ ॥

न चेयं ताभ्योऽरण्यवासिनीभ्यः पताकावेश्याभ्यः पापीयसी । किं ब्रवीषि ? "काभ्य" इति । कथं न जानीषे —

यास्त्वं मत्ताः काकिणीमात्रपण्याः
नीचैर्भोग्याः सोपचारैर्नियम्याः ।
लोकैरुच्छन्नं काममिच्छन् प्रकामं
कामोद्रेकात् कामिनीऽप्यभ्यरण्ये ॥ ८४ ॥

किं ब्रवीषि ? "कुतस्त्वयैतदुपलब्धं" इति । सहस्रचक्षुषो वयमीदृशेषु प्रयोजनेषु । अपि च, पदात्पदमारोक्ष्यति भवान् —

त्यक्त्वा रूपाजीवां यस्त्वं कुब्जां वयस्य कामयसे ।
कुब्जामपि हि त्यक्त्वा गन्तासि स्वामिनीमस्याः ॥ ८५ ॥

एष प्रहस्य प्रस्थित: । इतो वयं साधयाम: । (परिक्रम्य)

अये अयमपर: क: सिंहलिकाया मयूरसेनाया गृहान्निष्पत्य स्कन्धविन्यस्तवसनो विमलासिपाणिभिर्दाक्षिणात्यै: परिवृतो भद्राङ्कं विरळमुत्तरीयमाकर्षन्नान्ध्रकं कार्ष्णायसं निवसित: कुंकुमानुरक्तच्छविस्तांबूलसमादानव्यग्रपाणिरित एवाभिवर्तते । भवतु, दृष्टम् । एष हि विदर्भवासी तलवरो हरिशूद्र: । मां यदा तावदयं तां कावेरिकामनुरक्त इति ममैव तु समक्षं सपादपरिग्रहमनुनयन्नप्युक्तस्तया —

तामेहि किं तव मया ज्योत्स्ना यदि क इव दीपशिखयार्थ: ।
विरम सहसंग्रहीतुं बिल्वद्वयमेकहस्तेन ॥ इति ॥ ८६ ॥

तत् कथमनेनेयमनुनीता भविष्यति? किमयमनुरक्तामपि त्यक्त्वाऽन्यां प्रकाशं कामयत इति वेशप्रत्यक्षमात्मनो दौर्भाग्यमयशस्यमिति स्वयमेव प्रसन्ना । आहोस्वित् काम्यमानं कामयन्ते स्त्रिय इति स्त्रीस्वभावादस्या: संघर्ष उत्पन्न: उताहो परिव्ययार्थकर्शितया मात्रैवानुनियुक्ता भविष्यति । सर्वथा प्रक्ष्यामस्तावदेनम् । (उपसृतकेनाञ्जलिं कृत्वा)

तां सुन्दरीं दरीमिव सिंहस्य मनुष्यसिंह सिंहलिकाम् ।
युक्तं भवता मोक्तुं द्रमिळीसुरताभिलाषेण ॥ ८७ ॥

किं ब्रवीषि? "अनुनीता मया मयूरसेना । एष तस्या एव गृहादागच्छामि" इति ॥

कथय कथय कथमवशीर्णप्राय: सन्धिरनुष्ठित: ॥

किं ब्रवीषि? "अद्य तृतीयेऽहन्यहमपि वेश्याध्यक्षप्रतिहारद्रोणिलकगृहे प्रेक्षायामुपनिमन्त्रितस्तत्र च मयूरसेनाया लास्यवारो बुद्धिपूर्वक इत्यवगच्छामि । तत: प्रतारितेष्वातोद्येषु देवतामङ्गळं पूर्वमुपोह्य प्रस्तुते गीतके प्रनृत्तायां नर्तक्यां प्रथमवस्तुन्येव मयूरसेनाया: खलु

नृत्ते प्रयोगदोषा गृहीता" इति । मातावङ्गः मयूरसेनायाः खलु नृत्ते प्रयोगदोषा गृह्यन्त इति । कस्यायमतटप्रपातः ॥

किं ब्रवीषि? "भगवत्या वारुण्या" इति ।

युक्तं नित्यसन्निहिता भगवती सुरादेवी प्रतिहारगृहे ।

अथ कमन्तरीकृत्यायं सुराविभ्रमः ।

किं ब्रवीषि "वयस्यमेव ते लासकमुपचन्द्रक"मिति ।

किमु (ननु) पपन्नमायतनं हि स ईदृशानाम् ।अपि तु सविषयस्तस्यैषः । ततस्ततः ।

किं ब्रवीषि "स चोपचन्द्रपक्षे ससर्वसामाजिकजनः मयापि मयूरसेनायाः पक्षः परिगृहीतः" इति ।

साधु वयस्य देशकालौपयिकमनुष्ठितम् । ततस्ततः । किं ब्रवीषि "ततो न तेषां बुद्धिं परिभवामि । अपरिभूतामेव सदस्या आगमप्रधानतया मे प्राश्निकानुमते प्रतिष्ठितः पक्ष" इति ॥

साधु वयस्यानन्यसाधारणेन पण्येन क्रीता तत्रभवती । ततस्ततः ॥

किं ब्रवीषि "ततः सर्वगणिकाजनप्रत्यक्षं दत्ते पारितोषिके मयूरसेनायाः स्मितपुरस्सरेणापाङ्गपातिना कटाक्षेण प्रसादित इवास्मि । कावेरिकायास्तु पुनरसूयापिशुनमुत्थाय गच्छन्त्या, आकारेण बहूपालब्ध इवास्मि । तयोश्च कोपप्रसादयोश्च प्रत्यक्षतयोभयतटभ्रष्ट इव सन्देहस्रोतसा ह्रियमाणस्तस्मात्सङ्कटात्कथञ्चिद्गृहानागतः । उपविष्टश्च कानयोः किं प्रतिपत्स्यत इति वितर्कडोलां वाहयामि । ततः सहसैव मे प्रियया समेत्य नेत्रे निमीलिते । ततो विहस्य मयोक्ता

'नेत्रनिमीलननिपुणे किं ते हसितेन चोरि गूढेन ।
सूचयति त्वां पाण्योरनन्यसाधारणः स्पर्शः ॥ ८८ ॥ इति

एवमुक्तयानया सुरभितनिश्वाससूचितमदस्खलिताक्षरमभिहितोऽहमा-चक्ष्वमा काह'मिति । ततो मयोक्ता

'रोमाञ्चकर्कशाभ्यां प्रत्युक्तासि ननु मे कपोलाभ्याम् ।
यद्वदसि पुनर्मुग्धे स्वयमेवाचक्ष्व काह'मिति ॥ ८९ ॥

तत उन्मीलय मामुकवती 'अनेनैव रोमाञ्चसंज्ञकेन कैतवेन अयं जन आकृष्यत' इत्युक्त्वा मां कपोले चुम्बित्वा प्रस्थिता । ततो मयोक्ता

'चुम्बितेनेदमादाय हृदयं क्व गमिष्यसि ।
चोरि पादाविमौ मूर्ध्ना धृतौ मे स्थीयतां ननु' ॥ ९० ॥

एवंचोक्ता शयनमुपगम्योपविष्टा। ततो मयास्याः स्वयं पादौ प्रक्षालितौ । अनया चास्म्युक्तः 'गृहीतं पापम् । गृहीदानीं कितवः खल्वसी'ति । ततो विकोचमुकुलजालकेनेव मालतीलताविहसितेनैकहस्तावलम्बितसरशननिवसना पर्यङ्कावेष्टनद्विगुणमध्यबाहुमृणालिकात्रिकपरिवर्तनसाचीकृतदर्शनीयतरा तदानीं वेष्टमानमध्यविषमवलिप्रनष्टनाभिमण्डलप्रविषमीकृत रोमराजिरेकस्तनावगाळितहारापाश्रितेतरस्तनकलशपार्श्वावगाळितकपोलपर्यस्तकुण्डलमकराविष्ठितविशेषककान्ततरेणां सपरावृत्त शोभिनावस्थानेन लज्जाद्वितीया रतिरिव रूपिणी समुत्थितैकभ्रूलतिकेन कुवलयशबलं जलमिवाकिरन्ती दृष्टिविक्षेपेण मामुक्तवती 'यत्तेरोचत' इति। ततोऽहमासङ्गमालेख्यवर्णकपात्रं गवाक्षाद्दाक्षिण्य चरणनळिनरागायोपस्थितः । अथ वयस्यालक्तकविन्यासविन्यस्तचक्षुरुत्क्षिप्तपार्ष्णिगुल्फनूपुराधिष्ठितजङ्घाकाण्डायाः तस्या असंभुक्तत्वादनूरुग्राहिणो मर्मरस्योपसंहारभङ्गाभोगानुकारिणः कौशेयस्यासंयतत्वाद्गजकलभदन्तदशनच्छदान्तरमिव कदळीगर्भमिव चान्तरूरुमीक्षे । ईक्षणच्चापोह्याविनीतचक्षुरसीत्युक्त्वा पादमाक्षिप्योरसि मां ताडितवती । ततो रोमाञ्चकवचकर्कशत्वचा मयोक्ता 'नार्हसि माससमाप्तरागमवक्षेप्तु'मिति। ततस्तयाहमुक्तः 'साधु खलु निमीळिताक्षः समापयैन'मिति। तत-

स्तस्या लाक्षरसं निमीलिताक्षोऽर्पयामि चरणाभ्यां सकचग्रहमधरोष्ठे गृहीतोऽस्मि। ततस्तथैव विवृतरोमाञ्चं मां समभिवीक्ष्याशोकसमदोहलोऽसि नमोऽस्तु ते शाठ्यायेति मां परिष्वज्यशय नमुपगता। ततः परं देवानां प्रिय एव ज्ञास्यति" इति ॥

यद्येवमर्हति भवानपि तौण्डिकोकिविष्णुनागप्रायश्चित्तार्थं सन्निपतितान्विटानुपस्थातुम् ॥

किं ब्रवीषि "शान्तमेतत् पुनरपि यदि शिरो मे तस्याश्चरणकमलताडनेनानुगृह्येत तदेव मे प्रायश्चित्तम्" इति ॥

यद्येवं यमुनाह्रदनिलयो यदुपतिचरणाङ्कितललाटो नागः कालिय इव वैनतेयस्यावध्य इदानीं सर्वविटानामपि । एष विहस्यायमञ्जलिरिति प्रस्थितः । यावदहमपि विटसमाजं गच्छामि । अहो तु खलु सुहृत्कथाव्यग्रैरस्माभिरतीतमप्यहो न विज्ञातम् । संप्रति हि—

सोत्कण्ठैरिव गच्छतीति कमलैर्मीलद्भिरालोकितः
प्रच्छायैरधिरुह्य वेश्मशिखराण्युत्सार्यमाणातपः ।
तैः स्पृष्ट्वा चिरमुन्मुखीषु किरणैरुद्यानशाखास्वसौ
यात्यस्तं वलभीकपोतनयनैराक्षिप्तरागो रविः ॥ ९१ ॥

अपि चेदानीम्

प्राकाराग्रे गवाक्षैः पततिखररुतैः सूच्यमानोऽपि लाळः
प्रासादेभ्यो निवृत्तो व्रजति समुचितां वासयष्टिं मयूरः ।
सांध्यं पुष्पोपहारं परिहरति मृगः स्थण्डिले स्वप्तुकामः
तोयादुत्तीर्य चासौ भवनकमलिनी वेदिकां याति हंसः ॥ ९२ ॥

(परिक्रम्य)

एते प्रयान्ति घनतां वलभीषु धूपाः
वैडूर्यरेणव इवोत्पतिता गवाक्षैः ।
रथ्यासु चैतमवगाढमुदग्रमेत्य
स्नानोदकौघमनुपद्चरणा भ्रमन्ति ॥ ९३ ॥

अहो नु खल्विदानीमस्य संमृष्टसिक्तावकीर्णकुसुमप्रद्वाराजिरस्य प्रादोषिकोपचारव्यग्रपरिचारकजनस्य देशवयोविभवानुरूपालंकारव्यापृतवारमुख्यजनस्य प्रचरितमदनदूतीसञ्चाररमणीयस्य प्रवृत्तमत्तविटविदग्धपरिहासरसान्तरस्य स्नातानुलिप्तपीतप्रतीततरुणजनावकीर्णचतुष्पथशृङ्गाटकस्य वेशमहापथस्य परा श्रीः । इह हि—

एषा रौत्युपवेशिता गजवधूरारुह्यमाणा शनैः
एतत्कम्बळबाह्यकं प्रमदया द्वाःस्थं समारुह्यते ।
शिञ्जन्नूपुरमेखलामुपवहन्वेश्यां चलत्कुण्डलां
श्रोणीभारमपारयान्निव हयो गच्छत्यसौ धौरितम् ॥९४॥

अपि चास्मिन्निमाः—

प्रदीपकरवल्लरीजटिलचारुवातायना
मयूरगळमेचकैरनुसृतास्तमोभिः क्वचित् ।
विभान्ति गृहभित्तयो नवसुधावदातान्तराः
तमालहरितालपङ्ककृतपत्रलेख्या इव ॥ ॥९५॥

(परिक्रम्य)

सर्वथा रमणीयस्तावदयमुद्भिद्यमानचन्द्रसनाथ उत्सवः प्रदोषसंज्ञको जीवलोकस्य। संप्रति हि— एष भगवांश्चक्षुषां साधारणं रसायनं हसितमिव कुमुदवापीनामुदेति शीतरश्मिः । य एषः—

किं नीलोत्पलपत्रचक्रविवरैरभ्येपि मा चुम्बितुं
न त्वां पश्यति रोहिणी कथय मे सन्त्यज्यतां वेपथुः ।
मत्तानां मधुभाजनेष्वितिकथाः श्रोतुं सहासा इव
स्त्रीणां कुण्डलकोटिभिन्नकिरणश्चन्द्रः समुत्तिष्ठति ॥९६॥

(परिक्रम्य)

गायत्येषा वल्गुकान्तद्वितीया
सुप्रक्वाणा स्पृश्यतेऽसौ विपञ्ची ।
बध्वा गोष्ठीं पीयते पानमेत-
द्धर्म्याग्रेषु प्राप्तचन्द्रोदयेषु ॥ ॥ ९७ ॥

अपि चेदानीमेष भगवान्—

विरचयति मयूखैर्दीर्घिकाम्भस्सु सेतुं
विसृजति कदलीषु स्वाः प्रभादण्डराजीः ।
पुनरपि च सुधाभिर्वर्णयन् सौधमालाः
क्षरति किसलयेभ्यो मौक्तिकानीव चन्द्रः ॥ ९८ ॥

(परिक्रम्य) अहो तु खलु क्षीरोदेनेवोद्वेलप्रवृत्तविकीर्यमाणवीचिराशिना ज्योत्स्नासंज्ञकेन पयसा प्रसर्पतानुगृहीत इव जीवलोकः। सम्प्रति हि—

एते व्रजन्ति तुरगैश्च करेणुभिश्च
कर्णीरथैरपि च कम्बलवाह्यकैश्च ।
आलिङ्गिता युवतिभिर्मुदिता युवानो
गन्धर्वसिद्धमिथुनानि विहायसीव ॥ ॥ ९९ ॥

(परिक्रम्य)

असावन्वारूढो मदललितचेष्टः प्रमदया
परिष्वक्तः पृष्ठे निबिडतरनिक्षिप्तकुचया ।
परावृत्तश्चुम्बन्व्रजति दयितां यस्य तुरगे
गृहानेषोऽभ्यासादनुपतति नोत्क्रामति पथः ॥ १०० ॥

कश्च तावदयमस्मिंश्चन्द्रातपेऽप्यन्धकार इव वर्तमानो वेशरथ्यायां गर्भ-गृहभोगेन हिमशैलेऽयमाविष्करोति? आः ज्ञातम् । एष सौराष्ट्रिकः शककुमारो जयन्तक इमां यदृदासीं बर्बरिकामनुरक्तः । किञ्च तावद-नेनैतस्मात् सर्ववेश्यापत्तनाद्देशवद्देशबर्बर्या गुणवत्त्वमवलोकितम् । किञ्च तावत् —

अधिदेवतेव तमसः कृष्णाशुक्ला द्विजेषु चाक्ष्णोश्च
असकलशशाङ्कलेखेव शर्वरी बर्बरी भाति ॥ १०१ ॥

अथवा सौराष्ट्रिका वानराबर्बरा इत्येको राशिः किमत्राश्चर्यम् । तथा हि—

धवलप्रतिमाश्यामपि बर्बर्यां सक्तचक्षुषो ह्यस्य ।
अलससकषायदृष्टेः ज्योत्स्नापीयं तमिस्रेव ॥ १०२ ॥

तदलमयमस्य पन्थाः । इतो वयम् । (परिक्रम्य) इयमपरा का —

कर्णद्रुमावनतकाञ्चनतालपत्रा
वेश्यन्तलग्नमणिमौक्तिकहेमगुच्छा ।
कूर्पासकोत्कवचितस्तनबाहुमूला
लाटी नितम्बपरिवृत्तदशान्तनीवी ॥ ॥ १०३ ॥

(विचार्य) भवतु विज्ञातम् । एषा हि सा राका राज्ञः स्यालमाभीलकं मयूरकुमारं मयूरमिव नृत्यन्तमालिङ्गन्ती चन्द्रशालाग्रे वेशवीथ्यामा-त्मनः सौभाग्यं प्रकाशयति । अयमपि चार्जवेनानया तपस्वी क्रीत इव ।

अपि च मयूरकुमारं गौरीकृष्णमतिदुर्बलं स्थूला ।
स्वमिव प्रच्छायाग्रकमुरसि विलग्नं वहत्येषा ॥ १०४ ॥

(परिक्रम्य) इयमपरा का (विचार्य)

इयं हि सा तत्रभवतः सुगृहीतनाम्नः शार्दूलवर्मणः पुत्रस्य नः प्रियवय-

स्यस्य वराहदाहस्य प्रियतमा यवनी कर्पूरतुरिष्ठा नाम प्रतिचन्द्राभिमुखं मधुनः कांस्यमङ्गुलित्रयेण धारयन्ती कपोलतलस्खलितबिम्बमवलम्ब्य कुण्डलं किरणैः प्रेङ्खोलितमंसदेशे शशिनमिवोद्वहन्ती यैषा—

चकोरचिकुरेक्षणा मधुनि वीक्षमाणा मुखं
विकीर्य यवनी नखैरलकवल्लरीमायताम् ।
मधूककुसुमावदातसुकुमारयोर्गण्डयोः
प्रमार्ष्टि मदरागमुत्थितमलक्तकाशङ्कया ॥ १०५ ॥

अपि च यवनी गणिका, वानरी नर्तकी, मालवः कामुको गर्दभो, गायक इति गुणतः साधारणमवगच्छामि । सर्वथा सदृशयोगेषु निपुणः खलु प्रजापतिः । तथा हि—

खदिरतरुमात्मगुप्ता पटोलवल्ली समाश्रिता निम्बं
श्लिष्टो बत संयोगो यदि यवनी मालवे सक्ता ॥ १०६ ॥

तत्काममियमपि मे सखी नत्वेनामभिभाषिष्ये । को हि नाम तानि वानरी निष्कूजितोपमानि चीत्कारभूयिष्ठानि अप्रत्यभिज्ञेयव्यञ्जनानि किञ्चित्करेणान्तराणि (?) प्रदेशिनीलालनमात्रसूचितानि स्वयंवेशयवनीकथितानि श्रोष्यति । तदलमनया (परिक्रम्य) अयमपरः कः—

प्रतिमुखपवनैर्वेगादुत्क्षिप्ताग्रालकोत्तरीयान्ताम् ।
कान्तां हरति करेण्वा वासवदत्तामिवोदयनः ॥ १०७ ॥

(विचार्य) आ विदितम् । एष स इभ्यपुत्रो विटप्रवाल इति डिण्डिभिरभ्यस्तनामा सुरतरणपटकव्यवहाराणामधिपतिस्तां वेशसुन्दरीमस्मत्बालिकां मदनपरवशः पितुर्मातुश्च शासनमुपेक्ष्यानुरक्त एव । वाममतिडिण्डी खल्वयम् श्वशुरशब्दावकुण्ठनास्तु वयम् । तदलमनेनाभिभाषितेन । अयमस्याञ्जलिरित्स्तावद्वयम् । (परिक्रम्य) ॥

यावदहमपि विटसमाजं गच्छामि । एषोऽस्मि भोः सुवृथातिवाहिते (?) वेशमहापथे विटमहत्तरस्य भट्टिजीमूतस्य समन्तात्सन्निपातितविटजनवाहनसहस्रसंबाधप्रद्वाराङ्गमुत्क्षिप्तरजतकलशपाद्यपरिचारकोपाश्रित-तोरणं भवनमनुप्राप्तः। सुष्ठु खल्विदमुच्यते—"महान्तः खलु महतामारम्भा" इति। साम्प्रतं ह्येतदृशार्धवर्णं (?) पुष्पमुत्कीर्यते मुक्तमासज्यते ग्रथितं सञ्चार्यन्ते धूपाः प्रज्वाल्यन्ते दीपाः उच्यते स्वागतं मुच्यते यानं दृश्यते विभ्रमः उपगीयते गीतं उपवाद्यते वाद्यं दीयते हस्तः कथ्यते श्लक्ष्णं आलिङ्ग्यते स्निग्धं अवलम्ब्यते सप्रणयं अवनम्यते सविनयं स्पृश्यते पृष्ठं आहन्यते सभ्रूक्षेपं आघ्रायते शिरः स्थीयते सविभ्रमं उपविश्यते सलीलं विश्राण्यते चन्दनं आलिप्यते वर्णकः विन्यस्यते विलेपनं उत्कीर्यते चूर्णः परिहास्यते विटैः प्रतिगृह्यते विलासिनीभिरिति । किं बहुना—

पुष्पेष्वेते जानुदघ्नेषु लग्नाः
कृच्छ्रात्पादा वामनैरुद्ध्रियन्ते ।
विभ्रान्ताक्ष्यः केतकीनां पलाशान्
सीत्कुर्वाणाः पादलग्नान् हरन्ति ॥ ॥ १०८ ॥

अपि चैते विटमुख्याः—

श्रीमन्तः सखिभिरलङ्कृतासनार्द्धाः
कुर्वन्तश्चतुरममर्मवेधि नर्म ।
वेश्याभिः समुपगताः समं समन्ता-
दुक्षाणो व्रज इव भान्ति सोपसर्पाः ॥ १०९ ॥

अपि चैषामेतत्सदः—

नभ इव शतचन्द्रं योषितां वक्त्रचन्द्रैः
कृतशबलदिगन्तं सम्पतद्भिः कटाक्षैः ।
सपरिघमिव यूनां बाहुभिः सम्प्रहारैः
निचितमिव शिलाभिश्चन्दनार्द्रैरुरोभिः ॥ ११० ॥

अपि चास्मिन् —

एते विभान्ति गणिकाजनकल्पवृक्षाः
तादात्विकाश्च खलु मूलहराश्च वीराः
बाल्येऽपि काष्ठकलहान् कथयन्ति येषां
वृद्धाः सुयोधनवृकोदरयोरिवोच्चैः ॥ १११ ॥

तदेतावदहमपि सुहृन्निदेशवेष्टने शिरसि भगवते चित्तेश्वरायाञ्जलिं कृत्वा सुहृन्निदेशादिममधिकारं पुरस्कृत्य प्रायश्चित्तार्थं तत्रभवतस्तौण्डिकोकेर्विष्णुनागस्य घोषणापूर्वं विटान्विज्ञापयामि ॥ (परिक्रम्य) भोभोः सकलक्षितितलसमागताः प्रियकलहाः कलहानां च निवेदितारो धूर्तमिश्राः शृण्वन्तु शृण्वन्तु भवन्तः ॥

कामस्तपस्विषु जयत्यधिकारकामो
विश्वस्य चित्तविभुरिन्द्रियवाज्यधीशः ।
भूतानि बिभ्रति महान्त्यपि यस्य शिष्टिं
व्यावृत्तमौलिमणिरश्मिभिरुत्तमाङ्गैः ॥ ११२ ॥

(परिक्रम्य)

अथ जयति मदो विलासिनीनां
स्फुटहसितप्रविकीर्णकर्णपूरः ।
स्खलितगतमधीरदृष्टिपातैः
तदनु च यौवनविभ्रमा जयन्ति ॥ ॥ ११३ ॥

तदेवं वारमुख्यजनचरणरजःपवित्रीकृतेन शिरसा धूर्तमिश्रान्प्रणिपत्य विज्ञापयामि । किं चैतद्विज्ञाप्यमिति? श्रूयताम्—

नागवद्विष्णुनामोऽसावुरसा वेष्टते क्षितौ ।
प्रायश्चित्तार्थमुद्विग्नन्तमेनं त्रातुमर्हथ ॥ ११४ ॥

किं मां पृच्छन्ति भवन्तः "कोऽस्यापनयः" इति । श्रूयताम्—

उत्क्षिप्तालकमीक्षणान्तगलितं कोपाञ्चितान्तभ्रुवा
दष्टार्धोष्ठमधीरदन्तकिरणं प्रोत्कम्पयन्त्या मुखम् ।
शिञ्जन्नूपुरया विकृष्य विगलद्रक्तांशुकं पाणिना
मूर्धन्यस्य सनूपुरः समदया पादोऽर्पितः कान्तया ॥

किं किं वदन्ति भवन्तः "कस्याः पुनरिदमविज्ञातपुरुषान्तरायाः प्रमादसंज्ञकमयशो विस्तीर्यत" इति ॥

ननु तत्रभवत्याः सौराष्ट्रिकाया मदनसेनिकायाः । एते विटा दिष्ट्या नेह कश्चिदिति संभ्रान्ता इव । य एते ॥

निर्धूतहस्ता विनिगूढहासा धिग्वादिनो धीरमुखानि बद्ध्वा
ध्यायन्ति संप्रेक्ष्य परस्परस्य जातानुकम्पा इव नाम धूर्ताः ॥

एतेषां तावदासीनानां नियुक्तो विटमहत्तरो भट्टिजीमूतः कृपया नाम परं वैक्लव्यमुपगतः । य एषः—

कष्टंकष्टमिति श्वासान्मुञ्चन्क्लान्त इव द्विपः ।
जीमूत इव जीमूतो नेत्राभ्यां वारि वर्षति ॥ ११७ ॥

एष मामाह्वयति । अयमागतोऽस्मि ॥

किमाज्ञापयति भट्टिः "श्रुतपूर्वं मया, भूयोऽपि वदसि—एवं प्रायश्चित्तार्थं ब्राह्मणोपगमनम् । तस्मादेवाहमुपविष्टस्तत्समयपूर्वकमुपगृह्यन्तां तत्रभवन्तो विटाः" इति ॥

यदाज्ञापयति भट्टिः । भो भो शृण्वन्तु शृण्वन्तु भवन्तः—

द्यूतेषु मास्म विजयिष्ठ पणं कदाचित्
मातुः शृणोतु पितरं विनयेन यातु ।

क्षीरं शृतं पिबतु मोदकमत्तु मोहात्
व्यूढापतिर्भवतु योऽत्र वदेदयुक्तम् ॥ ११८ ॥

अपि च

परिचरतु गुरूनपैतु गोष्ठ्या
भवतु च वृद्धसमो युवा विनीतः ।
पलितमभिसमीक्ष्य यातु शान्तिं
य इदमयुक्तमुदाहरेन्निषण्णः ॥ ११९ ॥

( विवृत्यावलोक्य ) एष धावाकिरनन्तकथः सहसोत्थाय मामाह्वयति । किं ब्रवीषि " तस्या एवेदमविज्ञातप्रणयायाः पातकं नात्रभवतः । श्रोतुमर्हति भवान्—

अशोकं स्पर्शेन द्रुममसमये पुष्पयति यः
स्वयं यस्मिन्कामो विततशरचापो निवसति ।
स पादो विन्यस्तः पशुशिरसि मोहादिव यया
ननु प्रायश्चित्तं चरतु सुचिरं सैव चपला" इति ॥१२०॥

सम्यग्भवानाह । तथा हि —

उपवीणित एष गर्दभः
समुपश्लोकित एष वानरः ।
पयसि श्रि (श्र) त एष माहिषे
सहकारस्य रसो निपातितः ॥ १२१ ॥

अपि त्वार्त्तानुपातानि प्रायश्चित्तानि । आर्तश्चायमुपागतस्तदनुग्रहीतुमर्हन्ति भवन्तः । तत्कनु खल्वेषां गोग्लनप्ता । य एष मदरभसचलितमौलिमेकहस्तेनप्रतिसमावध्य क्षुद्रमुक्ताबर्काणेमिव स्वेदबिन्दुभिर्ललाटदेशं प्रदेशिन्या परिमृज्य "श्रूयतामस्य प्रायश्चित्त" मिति मामाह्वयति । यावदुपसर्पामि । एते विटाः कश्च तावदयं विटभावकू-

पिताकार: प्रथमतरो विटो विटपरिषत्युत्थाय प्रायश्चित्तमुपदिशतीति कुपिता: । हण्डे मल्लस्वामिन् । श्रुतम् । एवमाहुरत्र भवन्तः । किं ब्रवीषि "मातावज्ञोऽत्यन्तामत्रभवन्त: ॥

तातं पञ्चत्वं पञ्चरात्रे प्रयाते
मित्रेष्वार्तेषु व्याकुले बन्धुवर्गे ।
एकं क्रोशन्तं बालमाधाय पुत्रं
दास्या सार्धं पीतवानस्मि मद्यम् ॥ १२२ ॥

कथमहमविट: " इति

एवं चेत्त्वामनुजानन्ति विटमुख्योऽसीति । आस्यताम् । किं ब्रवीषि " दीयतामस्यै प्रायश्चित्तम् " इति ॥

बाढम् । भूय: श्रावयामि । तत्किंनु खल्वेष मां शैठ्य: कविरार्यरक्षितो वायुवैषम्यनिपीडिताक्षरो मामाहूय"अखलु न खल्विदं प्रायश्चित्त" मिति प्रतिषेधति । अतिविटश्चैव धान्त: । कुत:—

विक्रीणाति हि काव्यं श्रोत्रियभवनेषु मद्यचषकेण ।
य: शिबिकुले प्रसूतो भर्तृस्थाने जरां यातः ॥ १२३ ॥

अपि च—

विक्रीणन्ति हि कवयो यत्रैवं काव्यमद्य चषकेण ।
काशिषु च कोसलेषु च गर्गेषु निषादनगरेषु ॥ १२४ ॥

यावदेनमुपसर्पामि । सखे अदमस्मि किं ब्रवीषि—

"धृतो गण्डाभोगे कमल इव बद्धो मधुकरै:
विलासिन्या मुक्तो बकुलतरुमापुष्पयति य: ।
विलासो नेत्राणां तरुणसहकारप्रियसख:
स गण्डूष: शीधु' कथमिह शिर: प्राप्स्यति पशो:"॥ इति ।

अयमपरो भवकीर्तिवेद्धकरः प्रायश्चित्तार्थं मामाह्वयति। अतिविदग्धश्च माणवकः। कुतः—

मुण्डां वृद्धां जीर्णकाषायवस्त्रां
भिक्षाहेतोर्निर्विशङ्कं प्रविष्टाम्।
भूमावार्तां पातयित्वा स्फुरन्तीं
योऽयं कामी कामकारं करोति ॥ १२६ ॥

यावदेनमुपसर्पामि किं ब्रवीषि। "इदमस्याः प्रायश्चित्तम्—

बध्यतां मेखलादाम्ना समाकृष्य कचग्रहैः।
अथ तस्याः प्रसुप्तायाः पादौ संवाहयत्वयम्" ॥ इति ॥

भो एतदपि प्रतिहतम्। एष इभ्यपुत्रश्रेष्ठपुत्रैरभ्यस्तनामा गान्धर्वसेनको हस्तमुद्यम्य मामाह्वयति। यद्यैष हस्तः ॥

वाद्येषु त्रिविधेष्वनेककरणैः सञ्चारिताग्रांगुलिः
ताम्राम्भोरुहपत्रदृष्टिरिव यस्तन्त्रीषु पर्यस्यते।
कोलं वानुगतेन येन दधता श्रोणीतटे वल्लकी-
मिभ्यान्तःपुरसुन्दरीकररुहक्षेपाः समास्वादिताः ॥

यावदेनमुपसर्पामि (उपेत्य) किं ब्रवीषि—

"जघनरथनितम्बवैजयन्ती
सुरतरणव्यतिषङ्गयोगवीणा।
क्व च मणिरशना वराङ्गनानां
क्व च चरणाशुभस्य गर्दभस्य"। इति ॥ १२९ ॥

(परिवर्तकेन) अयमिदानीं दाक्षिणात्यः कविरार्यकः प्रायश्चित्तमुपदिशति। किं ब्रवीषि—

"विभ्रमचेष्टितेनैव दृष्टिक्षेपेण भूयसा।
शिरःकर्णोत्पलेनास्य ताड्यतां मत्तया तया" ॥ इति ॥ १३० ॥

एतदपि प्रतिहतमनेन गान्धारकेण हस्तिमूर्खेण । किमिदमुच्यते भवता—

"नखविलिखितं कर्णे नार्यानिवेशितबन्धनं
खचितशबलं दृष्टिक्षेपैरपाङ्गविलम्बिभिः ।
यदि नरपशोरस्येदं भो शिरस्यतिपात्यते
सुरभिरजसा प्रायश्चित्तं किमस्य भविष्यति" ॥ इति ॥

बाढमेवमेतदिति प्रतिपन्ना विटमुख्याः (परिवर्तकेन) इमावपरौ मामाह्वयतः ॥

गुप्तमहेश्वरदत्तौ सुहृदावेकासनस्थितावेतौ ।
उपगतकाव्यप्रतिभौ वररुचिकाव्यानुसारेण ॥ १३२ ॥

यावदुपसर्पामि (उपसृत्य) हण्डे गुप्तरोमश किमाह भवान्—

'पादप्रक्षाळनेनास्याः शिरः प्रक्षाल्यता'मिति ।

कथमेतदपि विप्रतिषिद्धं त्रैविद्यवृद्धैरिति सुहृद्भिरनुगृहीतनाम्ना महेश्वरदत्तेन—

पादप्रक्षाळनं तस्याः पातुमप्येष नार्हति । इति ।

अयमपरोऽस्मत्सुहृत्सौवीरको वृद्धविटः स्वच्छन्दस्मितोदग्रया वाचा मन्त्रयते । किमाह भवान्—

निर्भूषणावयवचारुतराङ्गयष्टिं
स्नानार्द्रमुक्तजघनस्थितकेशहस्ताम् ।
तामानयाम्यहमयन्तु दधातु तस्याः
नेत्रप्रभाशबलमण्डलमात्मदर्शम् ॥ इति ॥

इदमपि प्रतिषिद्धमनेन कविना दाशेरकेण रुद्रवर्मणा । किं ब्रवीषि—

"विद्वानयं महति कौकिकुले प्रसूतो
मन्त्राधिकारसचिवो नृपसत्तमस्य ।
वेश्याङ्गनाचरणपातरजोऽवधूतान्
केशान्न धारयितुमर्हति मुण्ड्यतां सः" ॥ इति ॥

एष खल्वनुगृहीतोऽस्मीत्युक्त्वा विष्णुनागो विज्ञापयति 'किं किल संदानमिदं दासीपदन्यासघर्षितं शिरो विच्छिन्नमिच्छामि प्रागेव तु शिरोरुहाणि' इति । कथमेतदुच्यस्य प्रतिहतमन्येन विटमहत्तरेण भट्टिजीमूतेन । किमाह भवान्—

स्खलितवलयशब्दैरञ्चितभ्रूलतानां
खचितनखमयूखैरंगुळीयप्रभाभिः ।
किसलयसुकुमारैः पाणिभिः सुन्दरीणां
सुचिरमनभिमृष्टान्धारयत्वेष केशान् ॥ १३६ ॥

अपि चेदमस्याः प्रायश्चित्तं श्रूयताम्—

तस्या मदालसविघूर्णितलोचनायाः
श्रोण्यर्पितैककरसंहतमेखलायाः ।
सालक्तकेन चरणेन सनूपुरेण
पश्यत्वयं शिरसि मामनुगृह्यमाणम् ॥ इति ॥ १३७ ॥

एते विटाः साधुवादानुयात्रा एतदेव प्रायश्चित्तमिति वादिनः सम्भावयन्ति विटमहत्तरं भट्टिजीमूतम् । एष सर्वथानुगृहीतोऽस्मीत्युक्त्वा प्रस्थितस्तौण्डिकोकिर्विष्णुनागः । एष मामाह्वयति विटमहत्तरो भट्टी । अयमस्मि । किमाह भवान् । अनुष्ठितमिदं किं ते भूयः प्रियमुपहरामीति भो श्रूयताम् ॥

कुट्टिन्यश्चतुरकथा भवन्त्वरोगा
धूर्तानामधिकशताः पणा भवन्तु ।
भूयासुः प्रियविटसङ्गमाः पुरेऽस्मिन्
वारस्त्रीप्रणयमहोत्सवाः प्रदोषाः ॥ १३८ ॥

(निष्क्रान्तो विटः)

इति कवेरुदीच्यस्य विश्वेश्वरदत्तपुत्रस्यार्यश्यामिलकस्य कृतिः पादताडितकं नाम भाणः समाप्तः ॥

